

ittle one a cuddles?
I can't ch
no mice
But I'm
soft 'n' nic
Give the
Li'l Panda
a Handa
No carrots to eat
But I'm a treat
hug me tight
I'll give you
de
The
CHANDAMAMA
Collection of Soft Toys
CHANDAMAMA TOYTRONIX

# चन्दमामा

नवम्बर्-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः – 'चक्रपाणिः'    सञ्चालकः – 'नागिरेड्डी'

## बालान् अधिकृत्य चिन्तनम्

यदा नवम्बर्मासः आगच्छति तदा राष्ट्रं 'बालदिनम्' आचरति। नवम्बरमासस्य १४ दिनाङ्कः बालदिनम् अस्ति, यस्मिन् च दिने भारतस्य भूतपूर्वः प्रथमप्रधानमन्त्री जवहरलालनेहरू जन्म प्राप्तवान् आसीत्। तेन बालेषु यः स्नेहः प्रदर्शितः, बालानां हितार्थं ये प्रयत्नाः कृताः, ते च अभिवृद्धिशीलदेशैः अनुकरणीयत्वेन अङ्गीकृताः सन्ति।

'सार्क्'(सौत् एशियन् असोसियेषन् फार् रीजनल् को-ओपरेषन्) नामिकया सप्तराष्ट्रसदस्यया संस्थया, यस्याः च भारतदेशः अपि सदस्यः अस्ति, सद्यः एव कोलम्बोनगरे मन्त्रिस्तरीया काचित् गोष्ठी आयोजिता आसीत्। गोष्ठीविषयः आसीत्– 'दक्षिणैशियाप्रदेशे बालकाः' इति। आतिथेयेन श्रीलङ्कादेशेन बालानां विषये यत् शासनपत्रं घोषितं तद्विषये अपि गोष्ठ्यां चर्चा प्रवृत्ता।

तत् शासनपत्रं वदति – 'यस्य मानवस्य वयः १८ वर्षेभ्यः न्यूनं भवति सः बालकः इति परिगणनीयम्। मातापित्रादिपालकसम्बद्धानाम् अभिप्राय-स्थान-कार्यादीनां कारणतः उत्पद्यमानात् भेदभावात् दण्डनात् वा आत्मानं रक्षितुं सर्वेषां बालकानाम् अधिकारः अस्ति। जातिः, लिङ्गं, मतं, सामाजिकस्थानं वा अत्र विघ्नं कर्तुं न अर्हति' इति। शासनपत्रे बालकस्य जीवनं, सुस्थितिः, शिक्षणद्वारा स्वास्थ्यसेवाद्वारा च सर्वतोमुखः विकासः च उल्लिखितः अस्ति। सम्मेलनं ज्येष्ठान् न्यवेदयत् यत् आहाराभावम्, अस्वास्थं, निराश्रयत्वं, हिंसाचारं च विरुध्य बालाः जीवितुं यथा शक्नुयुः तथा साहाय्यं करणीयम् इति।

१९८६ तमे वर्षे बेङ्गलूरुनगरे सार्कसम्मेलनं यत् प्रवृत्तं तत्र निर्णीतं यत् बालानां विषये समस्तजगतः अवधानम् आक्रष्टव्यम् इति। ततः १९८७ तमे वर्षे संयुक्तराष्ट्रसङ्घेन बालकानाम् अधिकारम् अधिकृत्य काचित् आचारसंहिता रचिता, या च १९९० तमे वर्षे प्रवृत्ते बालीये विश्वशिखरसम्मेलने प्रधानचर्चाविषयः आसीत्।

गते जूनमासे रियो-डि-जनिरोनगरे १७० राष्ट्राणां पृथिवीशृङ्गसम्मेलनं प्रवृत्तम्। तत्र प्रमुखतया परिसरकालुष्यकारणतः उत्पद्यमानानां रोग-शीघ्रमृत्यु-कुपोषणादीनां विषये चिन्तनं प्रवृत्तम्।

एते सर्वे प्रयत्नाः सङ्केतयन्ति यत् बाल्यकालः जीवनस्य अत्यमूल्यः कालः, आनन्दमयजीवनस्य चिह्नं च इति। अतः तस्य पोषणम् अस्माकं कर्तव्यम्।

सम्पुटः–९    –१९९२    सञ्चिका–८

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००




MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB
मैगी-जिग्सा-पज़ल् इत्यनेन
सार्धं मैगी-पराक्रम-विश्वं सम्यक्
संयोजयन्तु।
मैगी-स्काई-ओवर इति-भवतः
क्रीडायां घनेषु आरुह्य विहरन्तु।
मैगी-एस्-एड्वेन्चरर्स्
क्रीडायां सागरतो नभस्तलपर्यन्तं
आरोहणाभियानं पूर्णतां नयन्तु।
मैगी-हू-डन्-इट्- क्रीडायां चौरं
निगृह्णन्तु।
विनोदप्रियाणां कृते
आश्चर्यकराः पराक्रमाः!
मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।
मैगी-रेडर्स-ऑफ-द-रेड्-स्टार
इति भवतः क्रीडायां चातुर्यपूर्णान्
अनभिज्ञान् विरुध्य भवतो
विनोदित्वं तोलयन्तु।
भो बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा
मैगी-जगतः पराक्रमेषु प्रविशन्तु।
एतत् केवलं मैगीनूडल्स्-
रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्त्तयित्वा
स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान्
प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः
भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं
अवाप्स्यन्ति।
स्मर्त्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं
स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु।
यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते
स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति
भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च,
वयं भवतः उपहारेण सार्धं निःशुल्कं
मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।
अस्माकं संकेतोऽस्ति
MAGGI CLUB
P.O. Box 5788 New Delhi-110 055
निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला।
प्रत्येकमपि उपहारद्वयं, यद् भवान् अधिगच्छति,
तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ एनीमल्स' -
प्रश्नमालामपि भवान् अधिगन्तुमर्हति।
MAGGI 2-minute noodles
अपरोऽपि उपहारः अद्यावधि यदि भवता मैगी-बर्डहाउस् नैव अवाप्तम् चेत् तदा सम्प्रति अवाप्नोतु!

# भारतस्य नूतनः राष्ट्रपतिः






गते जुलैमासस्य २५ दिनाङ्के डा. शङ्करदयाळशर्मा भारतस्य राष्ट्रपतित्वेन निर्वाचितः अभवत्, यश्च एतावत्पर्यन्तम् उपराष्ट्रपतिः आसीत्। एषः भारतस्य नवमः राष्ट्रपतिः। पञ्च वर्षाणि यावत् एषः एतत् पदम् अलङ्करिष्यति। लोकसभासदस्याः राज्यसभासदस्याः च सम्भूय राष्ट्रपतिं चिन्वन्ति।

'शासनपक्षीयाः विरोधपक्षीयाः च मिलित्वा सर्वसम्मतं राष्ट्रपतिं चिनुयुः' इति विरोधपक्षाणाम् आशयः आसीत्। किन्तु तेषाम् एषः आशयः सफलः न जातः। अतः राष्ट्रपतिपदार्थं निर्वाचनं प्रवृत्तम्। डा. शङ्करदयाळशर्मा काङ्ग्रेस्पक्षस्य अभ्यर्थी जातः। विरोधपक्षणां प्रतिनिधिः सन् प्रो. जी.जी. स्वेल् स्पर्धायां भागम् अगृह्णात्। स्वेल्वर्यः शासननिपुणः विद्वान् च। तस्य अपरं वैशिष्ट्यं यत् सः अनुसूचितजातीयः अपि। अनुसूचितजातीयः एव कश्चित् राष्ट्रपतिः स्यात् इति विरोधिपक्षाणाम् आशयः आसीत्। निर्वाचनतः पूर्वम् एव सर्वेषां मनसि एषः भावः दृढः आसीत् यत् डा. शङ्करदयाळशर्मा एव विजयी भविष्यति इति। तथैव प्रवृत्तम् अपि।

डा. शङ्करदयाळशर्मा १९१८ तमे वर्षे भोपालनगरे जन्म प्राप्तवान्। १९३९ तमे

वर्षे सः केम्ब्रिज्विश्वविद्यालयतः आंग्लभाषायां न्यायशास्त्रे च स्नातकोत्तरोपाधिं प्राप्य लखनऊ-विश्वविद्यालये न्यायशास्त्रविभागे प्राध्यापकः जातः। वर्षद्वयस्य अनन्तरं पुनरपि केम्ब्रिज्विश्वविद्यालयं गत्वा न्यायशास्त्रम् अध्यापयन् एव एषः सांविधानिकविधि-शास्त्रे (Constitutional Law) डाक्टरेट्पदवीं प्राप्तवान्। 'बार्'सदस्यः जातः अपि।

भारतं प्रत्यागतः सः न्यायवादिवृत्तिम् आश्रितवान्। तत्काले एव राजकीयक्षेत्रेण सः आकृष्टः सन् राष्ट्रियकांग्रेस्संस्थां प्रविष्टवान्। 'क्विट् इण्डिया' आन्दोलने एतेन भागः गृहीतः। बहुवारं कारागारवासः अनुभूतः च। अचिरात् एव सः भोपालप्रदेशकांग्रेस्समित्याः अध्यक्षः जातः। ततः सः १९५२ तमवर्षतः १९५६ तमवर्षं यावत् भोपालराज्यस्य, ततः रूपितस्य सुविशालस्य मध्यप्रदेशराज्यस्य च मुख्यमन्त्री आसीत्।

ततः कांग्रेस्क्रियासमितेः सदस्यः जातः। ततश्च केन्द्रे कांग्रेस्पक्षस्य प्रधानकार्यदर्शी अपि जातः।

१९७१ तमे वर्षे एषः लोकसभार्थं निर्वाचितः सन् इन्दिरागान्धिमन्त्रि-मण्डलस्य सञ्चरणमन्त्री जातः। १९८० तमे वर्षे पुनः लोकसभार्थं निर्वाचितः अभवत्। १९८४ तमे प्रवृत्ते निर्वाचने एषः भागं न गृहीतवान्। तथापि, किञ्चित्कालं यावत् आन्ध्रप्रदेशराज्यस्य राज्यपालः सन्, ततः भारतस्य उपराष्ट्रपतिः सन्, ततश्च राज्यसभायाः सभापतिश्च सन् जनादरपात्रं जातः। अधिकारावधौ निष्पक्षपातपूर्णः व्यवहारः शर्ममहोदयस्य वैशिष्ट्यम्।

शङ्करदयाळशर्मा श्रेष्ठः विद्यासम्पन्नः। बहवः ग्रन्थाः तेन लिखिताः। पत्रिकासम्पादनम् अपि तेन कृतम् एव। एवं डा. राधाकृष्णन्, डा. झाकिर् हुसेन् इत्यादयः इव सुप्रसिद्धेषु मेधाविषु अन्यतमः अस्ति डा. शङ्करदयाळशर्मा।

शङ्करदयाळशर्मा सङ्गीते अपि रुचिमान् अस्ति। क्रीडादिषु अपि एतस्य रुचिः नास्ति इति न। एवं बहुमुखप्रतिभया युक्तः अस्ति शर्ममहोदयः।

राष्ट्रपतिपदव्याः निमित्तं प्रमाणवचनं पठित्वा डा. शर्मा उक्तवान्– "अहं भगवन्तं प्रार्थयामि यत् देशस्य जनतायाः च प्रगत्यर्थं, सेवारूपं मदीयं कर्तव्यं सम्यक् निर्वोढुं च शक्तिं ददातु इति" इति।

राष्ट्रपतिपदवी देशस्य अत्युन्नता पदवी। एतस्याः पदव्याः प्राप्त्या शङ्करदयाळशर्मा यथा निभूषितः अस्ति तथैव एतस्य प्राप्त्या सा पदवी अपि विभूषिता अस्ति।

नूतनराष्ट्रपतेः आशयाः सफलाः भवन्तु इत्येवम् आशंसनं कुर्वती 'चन्दमामा' डा. शङ्करदयाळशर्ममहोदयम् अभिनन्दति, तदीयं शुभम् अशंसति च।






# श्वशुरगृहवासः

जयपुरनामके ग्रामे शिवरामः नाम कृषिकः आसीत्। तस्य पत्न्याः नाम शारदा। सा पत्युः अनुकूला आसीत्। तयोः पुत्रः जयदेवः। जयदेवः विद्यावान् भवेत् इति मातापित्रोः इच्छा। अतः तौ अध्ययनार्थं पुत्रं नगरं प्रेषितवन्तौ। स्वयं कष्टजीवनं यापयन्तौ तौ पुत्रस्य अध्ययनार्थं धनं प्रेषयतः।

पञ्चषाणि वर्षाणि अतीतानि। जयदेवः अध्ययनं समाप्य उद्योगान्वेषणं कर्तुम् उद्युक्तः। तदा धनराजनामकस्य कस्यचित् परिचयः अभवत्। धनराजः जयदेवस्य स्वभावादिकम् इष्टवान्। धनराजस्य एका एव पुत्री। 'यदि जयदेवः मम एकमात्रपुत्रीं परिणीय मम गृहे एव तिष्ठेत्, तर्हि वरं स्यात्' इति चिन्तयन् धनराजः जयदेवम् स्वगृहम् आहूय स्वकीयाम् इच्छां प्रकटितवान्। तस्मिन् समये तत्रैव इतस्ततः सञ्चरन्तीं धनराजपुत्रीं दीपिकां दृष्टवतः जयदेवस्य हृदये कम्पनम् आरब्धम्। सः ताम् इष्टवान्। किन्तु ग्रामे विद्यमानौ निर्धनौ मातापितरौ स्मरन् जयदेवः धनराजस्य वचनं निराकृतवान्। तदा धनराजः जयदेवस्य मनोविप्लवम् अवगच्छन् धनराजः पुनः उक्तवान्– "अहं भवतः मातापितृभ्यां सह वार्तालापं करोमि। यदि तयोः अङ्गीकारः अस्ति, तर्हि भवतः अपि अनुमतं किल!" इति। तदा जयदेवः 'अस्तु' इति अङ्गीकृतवान्।

अनन्तरं धनराजः जयदेवेन सह तस्य ग्रामं गत्वा जयदेवस्य मातापितरौ उक्तवान्– "भवन्तौ महता कष्टेन पुत्रं विद्यावन्तं कृतवन्तौ। सः मम एकमात्रपुत्रीं परिणीय मम गृहे एव तिष्ठतु इति मम इच्छा। किन्तु जयदेवः न अङ्गीकरोति। कृपया विवाहार्थम्



तं अङ्गीकारयताम्" इति।

तदा जयदेवस्य मातापितरौ जयदेवम् बोधितवन्तौ– "पुत्र, आवां तु वृद्धौ जातौ। अस्माकं कारणतः भवतः जीवनं नष्टं न भवेत्। भाविजीवनविषये चिन्तयतु। धनराजस्य पुत्र्याः परिणयः भवतः उचितः एव" इति। जयदेवः मातापित्रोः वचनम् अङ्गीकृतवान्।

शुभे मुहूर्ते दीपिका-जयदेवयोः विवाहः सवैभवं सम्पन्नः। विवाहानन्तरं धनराजः जयदेवस्य मातापितरौ उक्तवान्– "कृपया मम गृहे एव तिष्ठताम्" इति। धनराजस्य सौजन्यं दृष्ट्वा यद्यपि तौ सन्तुष्टौ, तथापि तौ धनराजस्य गृहे स्थातुम् अनिच्छन्तौ स्वग्रामं प्रति गतवन्तौ।

कानिचन दिनानि अतीतानि। कदाचित् धनराजः जयदेवम् उक्तवान्– "मया बहुवारं प्रार्थितौ चेदपि भवतः मातापितरौ स्वग्रामं गतवन्तौ। तयोः क्लेशः न भवेत् इति अहं तयोः कृते सहस्रं रूप्यकाणि प्रेषयामि" इति। अनन्तरं धनराजः कञ्चित् कर्मकरम् आहूय धनस्यूतं यच्छन् उक्तवान्– "एतत् धनं जयपुरवासिने एतस्य जयदेवस्य पित्रे शिवरामाय दत्त्वा आगच्छतु" इति।

श्वशुरस्य सौजन्यं दृष्ट्वा सन्तुष्टः जयदेवः दीपिकया सह सुखेन कालं यापयन् आसीत्।

केचन मासाः अतीताः। एकस्मिन् दिने जयदेवस्य बाल्यस्नेहितः सुधाकरः जयदेवस्य गृहम् आगतवान्। तस्मिन् दिने धनराजः ग्रामान्तरं गतवान् आसीत्।

सुधाकरः जयदेवम् उक्तवान्– "मित्र! मातापितरौ भवतः अध्ययनकाले महत् कष्टम् अनुभूतवन्तौ। इदानीम् अपि तौ महता कष्टेन जीवतः। किन्तु विवाहानन्तरं भवान् धनिकपुत्रीं परिणीय श्वशुरगृहे निवसति। अतः जनाः भवतः विषये उपहासवचनानि वदन्ति। एतादृशानि वचनानि श्रुत्वा अहं खेदम् अनुभवामि। किम् एतादृशः व्यवहारः भवतः शोभते?" इति।

मित्रस्य वचनं श्रुत्वा लज्जाम् अनुभवन् जयदेवः– "आम्। मया अनुचितं कृतम्।

किन्तु केभ्यश्चित् दिनेभ्यः पूर्वं मम श्वशुरः मातापित्रोः कृते सहस्रं रूप्यकाणि प्रेषितवान् आसीत्। तथापि इदानीं मातापित्रोः कष्टं कथम् इति तु न ज्ञायते। अस्तु तावत्। अहम् एव अचिरात् ग्रामं गत्वा तयोः योगक्षेमं विचारयिष्यामि" इति उक्तवान्।

"सहस्रं रूप्यकाणि प्रेषितानि इति! यदि तावत् धनं ताभ्यां प्राप्तं स्यात् तर्हि तयोः निश्चिन्तता अभविष्यत्। ताभ्यां तत् धनं न प्राप्तम् एव। धनं प्राप्तं चेत् भवतः पिता माम् अवदिष्यत्" इति उक्त्वा ततः स्वग्रामं गतवान् सुधाकरः।

अनन्तरं जयदेवः दीपिका च कर्मकरम् आहूय पृष्टवन्तौ– "पूर्वं कदाचित् धनराजः ग्रामस्थाय शिवरामाय दत्त्वा आगच्छतु इति उक्त्वा सहस्रं रूप्यकाणि दत्तवान् आसीत् खलु? तत् किं जातम्?" इति।

तदा कर्मकरः शिरः अवनमय्य मन्दस्वरेण उक्तवान्– "दत्त्वा आगच्छतु इति भवतोः पुरतः यद्यपि धनराजेन उक्तं, किन्तु अनन्तरं सः तत् धनं प्रतिस्वीकृतवान्। अतः धनं मया ग्रामं प्रति न नीतम्। अहम् अत्र निरपराधी" इति।

सः कर्मकरः प्रामाणिकः आसीत्। तस्य वचनस्य श्रवणात् ज्ञायते स्म यत् सः निरपराधी इति। पितुः कृपणतां वञ्चनां च स्मरन्ती लज्जाम् अनुभवन्ती दीपिका खेदेन पतिम् उक्तवती– "मम पिता कृपणः एव।



अतः भवतः पुरतः औदार्यवचनम् उक्त्वा ततः धनं कर्मकरतः प्रतिस्वीकुर्वन् कृपणतां प्रदर्शितवान् स्यात्। एतस्याः घटनातः नितरां लज्जाम् अनुभवामि अहम्। पितुः मनसि उपायेन परिवर्तनम् आनेतव्यम्। किन्तु अस्माकं प्रयत्नं सः यथा न जानीयात् तथा व्यवहरणीयम् अस्माभिः" इति।

ततः सप्ताहाभ्यन्तरे दीपिका शय्याम् आश्रितवती। तस्या हस्तौ पादौ च शक्तिहीनौ जातौ। मञ्चात् अवतर्तुम् अपि न शक्तवती सा। मुखात् वचनम् अपि सम्यक् न निस्सरति स्म। धनराजः वैद्यम् आनीतवान्। वैद्यः परीक्ष्य औषधं दत्तवान्। सप्ताहः अतीतः चेदपि दीपिकायाः आरोग्ये प्रगतिः



काऽपि न दृष्टा।

पुत्र्याः आरोग्यविषये चिन्ताक्रान्तः अभवत् धनराजः। तदा जयदेवः धनराजम् उक्तवान्– "सामान्येन वैद्येन एतस्य रोगस्य चिकित्सा कर्तुं न शक्या इति भाति। मम ग्रामे सुधाकरः नाम कश्चन महावैद्यः अस्ति। तम् आनाययाम" इति। धनराजः एतत् अङ्गीकृतवान्।

अनन्तरं जयदेवः अत्रत्यां परिस्थितिं पत्रे विस्तरेण निरूप्य सेवकद्वारा तत् पत्रं सुधाकराय प्रेषितवान्।

अनन्तरदिने एव सुधाकरः तत्र आगत्य दीपिकां परीक्ष्य विविधानि औषधानि दत्तवान्। अनन्तरं धनराजम् उक्तवान् च– "एषः रोगः औषधसेवनमात्रेण न शाम्यति। उत्तमवायुसेवनम् एतया करणीयम्। अतः एतां मम ग्रामं प्रेषयतु। वसत्यर्थं श्वशुरगृहं तु अस्ति एव। तत्रत्यस्य जलस्य, परिसरस्य, वायोः च कारणतः एषा अचिरात् एव स्वस्था भविष्यति। अहम् अपि तत्रैव निवसामि इत्यतः चिकित्सायाम् अपि सौलभ्यम् अस्ति" इति।

दीपिकां श्वशुरगृहं प्रेषयितुं न इच्छति धनराजः। किन्तु अन्यः कोऽपि मार्गः नास्तीत्यतः सः अङ्गीकारं सूचितवान्।

अनन्तरदिने जयदेवः पत्नीं स्वग्रामं नीतवान्। शिवरामः तत्पत्नी च पुत्रं स्नुषां च दृष्ट्वा नितरां सन्तुष्टौ।

शिवरामः शारदा च स्नुषां पुत्रीम् इति महत्या प्रीत्या पश्यतः। दीपिका प्रेमसागरे मज्जिता अभवत्। जीवने एतादृशं वात्सल्यं न दृष्टम् आसीत् तया। 'विवाहसमनन्तरम् एव अत्र अनागच्छन्ती अहं वात्सल्यतः एतावत्पर्यन्तं वञ्चिता आसम्' इति खेदम् अनुभूतवती सा।

केषाञ्चित् दिनानाम् अनन्तरं पुत्रीं जामातरं च नगरस्थं स्वगृहम् आनेतुं जयपुरग्रामं प्रति प्रस्थितवान् धनराजः।

पितुः आशयं ज्ञात्वा दीपिका श्वशुरयोः प्रीत्यतिशयपूर्णं व्यवहारम्, आत्मना प्राप्तां तृप्तिं च विस्तरेण निवेद्य– "तात! विवाहानन्तरम् अहं पतिगृहीया जाता। पतिगृहस्य मानापमाननं मम

मानापमाननम्। इदानीं जनाः मम पतिविषये एवं वदन्ति इति श्रूयते यत् सः मातापितरौ उपेक्ष्य श्वशुरगृहे सुखेन निवसति इति। एतादृशम् उपहासवचनं कथम् अहं सहे? अन्यच्च श्वशुरगृहं स्वर्गतुल्यम् अस्ति। अतः अहम् तत्रैव स्थातुं निश्चयं कृतवती अस्मि। अन्यच्च एतदपि मम भाति यत् वृद्धयोः भवतोः अपि ग्रामे एव वासः योग्यः स्यात् इति। प्रशान्तपरिसरे वासः असीमां तृप्तिं जनयति खलु?'' इति उक्तवती।

पुत्र्यां जातं परिवर्तनं दृष्ट्वा धनराजः आश्चर्यचकितः। सः पुत्रीम् उक्तवान्– ''वत्से! भवत्याः हितं मनसि निधाय एव अहं जामातरं गृहे स्थापितवान्। ग्रामवासः नगरे जातायै भवत्यै न रोचते इति मम विचारः आसीत्। किन्तु अत्र आगता भवती श्वश्रूश्वशुरयोः प्रीतिं प्राप्तवती अस्ति। श्वश्रूश्वशुरौ भवतीं पुत्रीम् इव वात्सल्येन पश्यतः इत्येतत् मया प्रत्यक्षं दृष्टम् अपि। भवती यदि ग्रामे एव स्थातुम् इच्छति तर्हि तदपि मम अनुमतम् एव। भवत्याः सन्तोषः एव मम सन्तोषः। मया जीवने यत् सम्पादितं तत् भवत्याः भविष्यतः निमित्तम् एव। मम सम्पत्तेः स्वामिनी सती भवती अत्रैव वसतु नाम'' इति।

''तदस्तु, भवतोः ग्रामं प्रति आगमनविषये भवता किमपि न उक्तम् एव खलु? भवन्तौ यदि अस्मिन् एव गृहे निवसतः तर्हि सर्वेषां सन्तोषः स्यात्'' इति उक्तवती दीपिका।

''वत्से! एतावत्पर्यन्तं स्वतन्त्रतया वासं कृतवते मह्यम् इदानीं परगृहवासः न रोचते। यद्यपि एतत् पुत्र्याः भवत्याः गृहं, तथापि अहम् अत्र वासम् एव इच्छामि। अतः ग्रामं तु आगमिष्यामि। किन्तु अनतिदूरे क्षेत्रं क्रीत्वा गृहं निर्माय वासं करिष्यामि। तेन प्रतिदिनं भवत्याः मुखदर्शनम् अपि भविष्यति'' इति उक्तवान् धनराजः।

दीपिका स्वनिश्चयं, पितुः निर्णयं च यदा पतिं श्वशुरं श्वश्रूं च उक्तवती तदा ते सर्वे सन्तुष्टाः अभवन्।



# प्रपितामहः

जयसिंहः कश्चन सैनिकः आसीत्। यदा सः सैनिकः आसीत् तदा श्रद्धया राजसेवां कृतवान् आसीत्। वयसः कारणतः सः निवृत्तिं प्राप्य ग्रामे वासम् आरब्धवान्। कदाचित् राजधानीं गतः सः पुरातनवस्तुविक्रयणस्थलं दृष्टवान्। कुतूहलेन आपणस्य अन्तः गतवान् च। तत्र मध्यवयस्कस्य कस्यचित् तैलवर्णचित्रम् आसीत्। चित्रस्थः मध्यवयस्कः गम्भीरमुखः सन् खड्गं बाणवारकं च हस्ते गृहीतवान् आसीत्। एतत् चित्रं जयसिंहाय नितराम् अरोचत।

आपणिकः जयसिंहस्य चित्रदर्शनासक्तिं दृष्ट्वा उक्तवान्– "श्रीमन्! पञ्चषशतवर्षेभ्यः पूर्वं स्थितस्य कस्यचित् वीरस्य चित्रम् एतत्। एतस्य नाम किमिति न ज्ञायते। किन्तु एतस्य विषये एवं हि श्रूयते यत् एषः युद्धक्षेत्रं गतः चेत् सहस्रं सैनिकान् संहृत्य एव खड्गं कोषे स्थापयति स्म, न तु ततः पूर्वम् इति। एतस्य मूल्यं वस्तुतः सार्धशतं रूप्यकाणि। किन्तु भवान् परमासक्त्या एतत् चित्रं पश्यन् अस्ति इत्यतः शतरूप्यकमूल्येन एतत् दास्यामि। स्वीकरोतु। मूल्यविषये पुनः विवादः मास्तु" इति।

जयसिंहः स्वसमीपे विद्यमानं धनं गणितवान्। आहत्य नवतिः रूप्यकाणि एव आसन्। अतः सः तत् चित्रम् क्रेतुम् अशक्नुवन् ततः निर्गतवान्।

ततः मासस्य अनन्तरं सः सैनिकवृत्तितः निवृत्तिं प्राप्तवतः खड्गसिंहस्य गृहं गतवान्। तत्र तेन तदेव चित्रं दृष्टं, यच्च क्रेतुं सः न शक्तवान् आसीत्।

आश्चर्यचकितं जयसिंहम् उक्तवान् खड्गसिंहः– "मित्र! एषः मम प्रपितामहः। पूर्वं रुद्रपुरयुद्धं नाम घोरं युद्धं प्रवृत्तम्। तत्र एषः मम प्रपितामहः शत्रून् कदलीसस्यानि इव संहृत्य वीरस्वर्गं प्राप्तवान्" इति।

तदा दीर्घं निश्श्वस्य उक्तवान् जयसिंहः– "गतमासे मत्समीपे दशोनशतं रूप्यकाणि केवलम् आसन्। यदि तत्काले कोषे दश रूप्यकाणि अधिकानि अभविष्यन् तर्हि चित्रे दृश्यमानः एषः मम प्रपितामहः अभविष्यत्" इति।





# माया-भवनम्

## ६

(वीरगिरिराज्यस्य युवराज्ञी विद्यावती सारससरोवरतः केनापि अपहृता, मायाभवने स्थापिता च। राजा वीरसेनः स्वपुत्र्याः अन्वेषणार्थं सर्वविधान् अपि प्रयत्नान् कृतवान्। महेन्द्रनाथः नाम कश्चन तेजस्वी युवकः युवराज्ञीम् अन्वेष्टुम् एकाकितया गन्तुं सिद्धः जातः। युवराज्ञ्या विरहितं सारससरोवरस्थं विश्रान्तिभवनं सर्वथा कान्तिहीनम् इव दृष्टं तेन। तदनन्तरम्....)

सारससरोवरे या वृद्धा परिचारिका कमला आसीत् तस्याः एव सदृशी काचित् वृद्धा आसीत् मायाभवने अपि। तस्याः वचनम् अनिच्छन्त्या अपि राजकुमार्या पालनीयम् एव आसीत्। असहायिका राजकुमारी स्वकीयं दौर्भाग्यं स्मरन्ती तल्पस्य उपरि शयाना नेत्रे निमीलितवती। इदानीं तस्याः मनसि विविधाः विचाराः– 'भवत्याः पिता अस्वस्थः इति असत्यम् उक्त्वा माम् अत्र आनीतवान् सः दुष्टः कः स्यात्? सः पितुः शत्रुः स्यात् वा? प्रजाः किं, सर्वदेशीयान् अपि प्रीत्या एव पश्यतः पितुः शत्रुः प्रायः न स्यात्। तथा चेत् कश्चन दुष्टः माम् अपहृतवान् इति चिन्तनीय मया। एषा विपत् धैर्येण सम्मुखीकरणीया मया। एतस्मात् मायाभवनतः कथञ्चित् विमोचनं प्राप्य



मातापित्रोः समीपं गन्तव्यं मया' इत्येवं चिन्तयन्ती राजकुमारी क्रमशः निद्रावशं गता।

कमलासदृशी वृद्धा यदा राजकुमारीं जागरितवती तदा वातायनतः बाल-सूर्यकिरणाः भवनस्य अन्तः आगताः आसन्। राजकुमारी उत्थाय परितः दृष्टिं प्रसारितवती। 'सूर्योदयानन्तरं बहुकालः अतीतः स्यात्'. इति चिन्तितवती सा।

"निद्रा समीचीना आसीत् इति भाति" इति उक्तवती वृद्धा।

"आम्। मया इदानीं स्नानं करणीयम्" इति उक्तवती विद्यावती।

"तदर्थं सर्वं सिद्धम् अस्ति। आगच्छतु मया सह" इति उक्त्वा सा वृद्धा राजकुमारीं स्नानगृहं नीतवती।

युवराज्ञी स्नानं समाप्य स्वनिमित्तं स्थापितं वस्त्रं धृतवती। यदा सा स्नानगृहात् बहिः आगता तदा तया यत् वस्त्रं धृतं तादृशम् एव वस्त्रं धृतवत्यौ युवती दृष्टे। ते दृष्ट्वा युवराज्ञी आश्चर्यचकिता।

तयोः परिचयं कारयन्ती उक्तवती वृद्धा– "एते भवत्याः परिचारिके। एकस्याः नाम नीला। अपरायाः नाम माला। यत्किमपि आवश्यकं चेत् भवती एते प्रष्टुम् अर्हति" इति।

"भवती अपि अत्रैव निवसति खलु?" इति पृष्टवती विद्यावती।

"आम्। कदाचित् बहिः अपि गच्छेयम्। किन्तु स च विचारः भवत्याः सम्बद्धः न। अत्र कः किं करोति इति ज्ञातव्यं नास्ति भवत्या। काऽपि किमपि न प्रष्टव्या। स्मरणे तिष्ठतु एतत्" इति गाम्भीर्येण युवराज्ञीम् उक्त्वा वेगेन ततः निर्गतवती सा कमलासदृशी वृद्धा स्त्री।

प्रातः उपाहारादिकं समाप्य युवराज्ञी विद्यावती तस्य विशालप्रकोष्ठस्य वातायनस्य पार्श्वे उपविष्टवती। प्रकोष्ठभित्तयः तलतः छदिपर्यन्तं काचकैः आच्छन्नाः आसन्। काचकरहितं स्थलं कुत्रापि न आसीत्। प्रकोष्ठस्य विशालं वातायनम् आसीत्। वातायनात् बहिः



तदा अपरा परिचारिका आगत्य व्यजनेन मन्दं वीजयितुम् उद्युक्ता अभवत्। सायं पर्यन्तं युवराज्ञी शय्यायां शयितवती एव आसीत्। उभे अपि परिचारिके पर्यायक्रमेण वीजनं कृतवत्यौ।

सायङ्काले सा कमलासदृशी वृद्धा आगत्य उक्तवती– "युवराज्ञि! उत्थिष्ठतु। उद्याने किञ्चित् विहारं करोतु। मन्दः वायुः वाति अत्र। सायं वायुविहारः शरीरे उत्साहं जनयति, खेदं च अपनयति" इति।

युवराज्ञी मौनम् उत्थाय तया वृद्धया परिचारिकाभ्यां च सह भवनपार्श्वस्थम् उद्यानं गतवती।

उद्याने अटवीतः आगतः सुगन्धः शीतलः वायुः मन्दं वाति स्म। युवराज्ञी कोमलानां हरिततृणानाम् उपरि सञ्चारं कुर्वती उद्याने स्थितानि विविधानि पुष्पाणि वृक्षान् च पश्यन्ती किञ्चित्कालं यापितवती। यदा सूर्यास्तः जातः तदा सा मायाभवनं प्रविष्टवती।

राजकुमारीम् अनुसृत्य आगता वृद्धा परिचारिका प्रकोष्ठस्य द्वारम् उद्घाटितवती। पूर्वदिने यत्र शयनं कृतम् आसीत् स च प्रकोष्ठः एतस्मात् भिन्नः इति ज्ञातवती युवराज्ञी। अस्य प्रकोष्ठस्य जवनिकाः अपि भिन्नवर्णेन सन्ति इत्यंशम् अपि लक्षितवती सा। रात्रौ भोजनस्य अनन्तरं तल्पे सुखेन शयाना सा निद्रां प्राप्तवती।

सुन्दरम् उद्यानम् आसीत्। उभे अपि परिचारिके सुन्दरतया वस्तूनां स्थापनार्थं वातायनस्य जवनिकायाः समीकरणे प्रकोष्ठालङ्कारे च उद्युक्ते। यदा ते इतस्ततः सञ्चरतः तदा तयोः प्रतिबिम्बं सर्वत्र दृश्यते स्म। तयोः प्रतिबिम्बं दृष्ट्वा युवराज्ञी ज्ञातवती यत् न केवलम् एतयोः वेषः, अपि तु एतयोः आकारः, व्यवहारः च अपि मम इव एव अस्ति इति। कथम् एवम् इति आश्चर्यम् अनुभूतवती सा।

मध्याह्नसमये काचित् परिचारिका भोजनम् अनीतवती। युवराज्ञी विना वचनं भोजनं समापितवती। भोजनानन्तरं च मौनं ततः उत्थाय शय्याम् आश्रितवती।

अनन्तरदिने प्रातः उत्थाय युवराज्ञी वातायनद्वारा बहिः दृष्टिं प्रसारितवती। ह्यः उद्यानस्य यः भागः दृष्टः तस्मात् भिन्नः एव भागः इदानीं तया दृष्टः। लतावृक्षपुष्पादयः अपि भिन्नतया एव दृश्यन्ते स्म। शयनात् उत्थिता सा स्नानार्थं स्नानगृहं गतवती। पूर्वदिने इव एतस्मिन् अपि दिने क्षालितानि वस्त्राणि स्नानगृहे स्थापितानि आसन्। स्नात्वा तानि धृत्वा स्नानगृहतः बहिः आगतवती युवराज्ञी। तदा तत्र परिचारिकाभ्यां सह वृद्धा स्थितवती आसीत्। युवराज्ञ्या यादृशं वस्त्रं धृतं तादृशम् एव वस्त्रं धृतवत्यौ आस्तां ते परिचारिके। आश्चर्यं नाम ते परिचारिके यमले इव एव आस्तां, युवराज्ञ्याः सदृश्यौ अपि आस्ताम्। तयोः चलन-वाग्व्यवहारादिकम् अपि युवराज्ञीम् एव अनुकरोति स्म।

"एषा सुरेखा। एषा सुलेखा। एते अद्य भवत्याः परिचर्यां कुरुतः" इति उक्त्वा सा वृद्धा ततः निर्गतवती।

ततः युवराज्ञी पार्श्वस्थां परिचारिकाम् उक्तवती— "सुलेखे! अहं किमपि पृच्छामि वा भवतीम्?" इति।

"युवराज्ञि, अहं न सुलेखा, अपि तु सुरेखा। मया किं साहाय्यं करणीयम्? निस्सङ्कोचं वदतु तावत्" इति उक्तवती सा।

"साहाय्यं किमपि न आवश्यकम्। भवती बहुकालतः अत्र वसति वा?" इति पृष्टवती



विद्यावती।

"न। मासद्वयतः अत्र वसामि" इति उक्तवती सुरेखा।

"ततः पूर्वं भवती कुत्र निवसति स्म?" इति पृष्टवती विद्यावती।

"स्वगृहे वसामि स्म" इति उक्तवती सुरेखा।

"भवत्याः विषये अहं सन्तुष्टा अस्मि। यदा अहं स्वभवनं गमिष्यामि तदा भवतीं नेतुम् इच्छामि। किम् एतत् अङ्गीक्रियते भवत्या?" इति पृष्टवती विद्यावती।

"युवराज्ञि! एतत् भवनम् अपि भवत्याः एव। यावत् स्वामी इच्छति तावत् भवत्याः वासः अत्रैव। ततः तु सः भवतीं कुत्र नयेत् इति



अनतिदूरे स्थितां परिचारिकां दृष्ट्वा उक्तवती— "सुरेखे! आगत्य मम पार्श्वे उपविशतु। भवत्या सह वार्तालापः करणीयः अस्ति मया" इति।

"युवराज्ञि! अहं सुलेखा अस्मि" इति वदन्ती सा परिचारिका विद्यावत्याः पार्श्वे उपविष्टवती।

"एवं वा? भवत्यौ आकारेण समाने इत्यतः नामाभिज्ञाने कदाचित् मम भ्रमः भवति। भवत्यौ वस्तुतः यमले खलु?" इति पृष्टवती विद्यावती।

"न। आवां न यमले। सहोदर्यौ अपि न" इति उक्तवती सुलेखा।

"कदा आरभ्य भवत्यौ अत्र वसतः?" इति पृष्टवती विद्यावती।

"द्वित्रेभ्यः मासेभ्यः आरभ्य" इति उक्तवती सुलेखा।

"एतस्मिन् महति भवने भवत्यौ उभे एव निवसतः, उत अन्ये अपि सन्ति?" इति पृष्टवती विद्यावती।

"ह्यः भवत्याः परिचर्यार्थम् माला नीला च आगतवत्यौ। अद्य आवाम् आगतवत्यौ। श्वः तदनन्तरं च अन्याः आगमिष्यन्ति। अस्मादृश्यः बह्व्यः सन्ति अत्र। किन्तु ताः न दृष्टाः मया। तासां नाम अपि न जानामि" इति उक्तवती सुलेखा।

"एवं तर्हि पुरुषाः किं न निवसन्ति अत्र? भवतीनां स्वामी वा अत्र वसेत् एव खलु?"

तु न ज्ञायते। कदा नयेत् इत्यपि न ज्ञायते" इति उक्तवती सुरेखा।

"एवं ननु?" इति उक्त्वा मौनम् आश्रितवती विद्यावती। ततः तासां मध्ये सम्भाषणं न प्रवृत्तम्।

एकवारम् एव बहुधा प्रश्नः न उचितः इति युवराज्ञी जानाति स्म। अतः सा मध्याह्नपर्यन्तं कयाचित् अपि सह कमपि वार्तालापं न कृतवती।

मध्याह्ने भोजनानन्तरं युवराज्ञी विश्रान्त्यर्थं तल्पे उपविष्टवती। उपायेन परिचारिकाणां द्वारा एतस्य भवनस्य विषये ज्ञातव्यम् इति तस्याः विचारः आसीत्। अतः सा उपधानम् आलम्ब्य सुखेन शयाना

इति पृष्टवती विद्यावती।

"पुरुषाः तु सन्ति एव। किन्तु ते अस्मत्तः दूरे कुत्रापि निवसन्ति। स्वामी तु अत्र विरलतया आगच्छति इति श्रूयते। अद्यावधि मया तु सः न दृष्टः। युवराज्ञि! अलं वार्तालापेन। इदानीं तु निद्रार्थं समयः खलु?" इति वदन्ती सुलेखा युवराज्ञ्याः शय्यां समीकृत्य यदा युवराज्ञी सुप्तवती तदा तस्याः उपरि आच्छादकं सम्यक् प्रसार्य ततः दूरं गतवती। वातायनस्य पार्श्वे स्थिते आसने उपविष्टवती च।

सायं विद्यावती यदा जागरणं प्राप्तवती तदा तां वायुविहारार्थं नेतुं वृद्धा आगतवती आसीत्। विद्यावत्या सह व्यवहारार्थं सदा वृद्धा स्त्री एव आगच्छति। अन्यः कोऽपि तस्मिन् भवने न दृश्यते। सा वृद्धा तु मौनव्रतधारिणी इव व्यवहरति। यावत् आवश्यकं तावान् एव वार्तालापः। एतत्सर्वं दृष्टवत्याः विद्यावत्याः मनसि विचारः– 'एतासां स्वामी कः स्यात्? सः मां किमर्थम् एवम् एतस्मिन् मायाभवने स्थापितवान् स्यात्?' इति। एवं चिन्तयन्ती एव युवराज्ञी किञ्चित्कालं विहारं कृतवती। यदा अन्धकारः प्रसृतः तदा सा वृद्धया सह भवनं प्रविष्टवती। अद्यापि पूर्वदिने इव सा अन्यं प्रकोष्ठं नीता।

अनन्तरदिने सा प्रातः उत्थाय स्नात्वा यदा आगतवती तदा नूतने परिचारिके उपस्थिते आस्ताम्। तयोः नाम मालिनी शालिनी चेति। ते अपि युवराज्ञी इव एव आस्ताम्। युवराज्ञ्या यादृशं वस्त्रं धृतं तादृशम् एव वस्त्रं धृतवत्यौ आस्ताम्। एतत्सर्वं परिशील्य युवराज्ञी ज्ञातवती यत् यः माम् अपहृतवान् सः महाबुद्धिमान् एव अस्ति। जनाः मां झटिति यथा अभिज्ञातुं न शक्नुयुः तथा कर्तुं सः मया सह मत्सदृश्यौ एव द्वे सदा स्थापयति। प्रथमक्षणतः अपि सः जागरूकताम् आश्रितवान् अस्ति इति। एतादृशे सन्दर्भे किं करणीयम् इति गाम्भीर्येण चिन्तनं कृतवती युवराज्ञी। –(अनुवर्तते)



# दूरतः पर्वतो रम्यः

लक्ष्मणगुप्तः कश्चन सामान्यः वणिक्। कश्चित् तम् उक्तवान् यत् पूर्वद्वीपान् गत्वा वाणिज्यं कृतं चेत् लक्षशः रूप्यकाणि सम्पादयितुं शक्यन्ते इति। अतः लक्ष्मणगुप्तस्य मनसि पूर्वद्वीपं कथञ्चित् गत्वा तत्र वाणिज्यं करणीयम् इति इच्छा प्रबला जाता। किन्तु तदीयाम् इच्छां श्रुत्वा मातापितरौ पत्नी च उक्तवन्तः– "दूरतः पर्वतो रम्यः इति वचनं श्रुतं खलु भवता? यः वाणिज्ये दक्षः भवति सः स्वग्रामे अपि वाणिज्येन प्रगतिं साधयितुम् अर्हति एव। दूरद्वीपेषु जनाः कीदृशाः इति न ज्ञायते। आत्मीयः तत्र कोऽपि न भवति। अतः अज्ञाते स्थले वाणिज्यम् अनुचितम्" इति। किन्तु लक्ष्मणगुप्तः मातापित्रोः पत्न्याः च उपदेशं तृणीकृत्य पूर्वद्वीपान् गन्तुं सन्नाहं कर्तुम् उद्युक्तः अभवत्।

अत्रान्तरे धनसम्पादनार्थं पूर्वद्वीपं गतः दूरबन्धुः रामसेनः स्वग्रामम् आगत्य लक्ष्मणगुप्तस्य गृहे एव वासं कृतवान्। लक्ष्मणगुप्तः रामसेनं पृष्टवान्– "मया श्रुतं यत् पूर्वद्वीपे वज्र-मौक्तिकादयः मार्गपार्श्वे राशीकृत्य विक्रीयन्ते इति। किम् एतत् सत्यं वा?" इति।

तदा रामसेनः खेदेन उक्तवान्– "दूरस्थस्य विषये बहुधा वचनानि सदा श्रूयन्ते। वस्तुतः तु तस्मिन् द्वीपे मौक्तिकानि एव न सन्ति। जनानां वचनेषु विश्वस्य अहम् अपि तत्र गतवान्। मम समीपे काचमणयः केचन आसन्। किन्तु तद्द्वीपवासी कश्चित् तान् मौक्तिकानि भावयन् चोरितवान्। तदा अहं ज्ञातवान् यत् अस्मद्देशीयं सामान्यमणिम् अपि रत्नं भावयन्तः जनाः तस्मिन् द्वीपे बहवः सन्ति इति" इति।

मित्रस्य वचनं श्रुत्वा लक्ष्मणगुप्तः ज्ञातवान् यत् दूरस्थस्य वस्तुनः रमणीयता न वास्तविकी, समीपं गत्वा दृष्टं चेत् वस्तुनः दोषाः ज्ञायन्ते इति। अतः सः पूर्वद्वीपं प्रति गमनस्य विचारं परित्यक्तवान्।






# राजनीतिनैपुण्यम्

**या**वत् वेतालः स्वस्य पराजयं न अङ्गीकरोति तावत् अहं प्रयत्नात् विमुखः न भविष्यामि इति निश्चितवान् इव स्थितः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रसमये एतस्मिन् घोरे श्मशानमर्गे धैर्येण कार्ये प्रवृत्तस्य भवतः साहसबुद्धिः नितरां श्लाघ्या। एतादृशः गुणः सर्वराजसाधारणः न चेदपि सर्वथा सुदुर्लभा तु न। एवं सुदुर्लभं गुणं प्राप्तवान् अस्मि इति गर्वः प्राप्तव्यः नास्ति भवता। यतः राज्यस्य पोषणार्थं भाविराजाय अर्पणार्थं च साहसबुद्धिमात्रं न पर्याप्तम्। तदर्थम् अन्या एव चतुरता आवश्यकी भवति। पूर्वं सत्यपालः नाम राजा आसीत्, यश्च

## वेतालकथा




एतादृश्याः चतुरतायाः अभावतः जीवने असफलः जातः। तस्य सत्यपालस्य कथां विस्तरेण श्रावयामि। शृणोतु तावत्'' इति।

अनन्तरं बेतालेन कथा आरब्धा—

पूर्वं चन्दनदेशं चन्द्रपालः नाम राजा पालयति स्म। सः विलासप्रियः आसीत्। सर्वदा सः विनोदगोष्ठीषु, नृत्यादिकार्यक्रमेषु, मदिरापाने च निरतः भवति स्म। अतः राज्यपालनस्य सर्वे व्यवहाराः उच्चाधिकारिणाम् अधीनाः जाताः। राज्ञः भीतेः अभावतः ते अधिकारिणः अन्याय्यमार्गानुयायिनः जाताः। सर्वत्र उत्कोचस्वीकारः दृश्यते स्म। अधिकारिणां भ्रष्टव्यवहारस्य कारणतः जनाः प्रतिदिनं कष्टम् अनुभवन्ति स्म। किन्तु एतत्सर्वं राजानं निवेदयितुं कस्यापि धैर्यं न आसीत्। अतः जनाः सोढुम् अपि अशक्नुवन्तः वक्तुम् अपि असमर्थाः सन्तः कथमपि दिनानि यापयन्ति स्म।

चन्दनदेशस्य पूर्वभागे भिल्लजातीयानां राज्यम् आसीत्। तस्य राजा जयसेनः चन्दनदेशस्य माण्डलिकः आसीत्। जयसेनः चन्द्रपालस्य विलासप्रियताम् असामर्थ्यं च ज्ञात्वा स्वतन्त्रः भवितुम् उपायं चिन्तयन् आसीत्।

मिहिरदेशः चन्दनदेशस्य प्रतिवेशिदेशः। तस्य राजा प्रचण्डवर्मा। सः चन्दनदेशस्य आन्तरङ्गिकीं दुःस्थितिं जानन्, माण्डलिकस्य जयसेनस्य विरोधं चापि जानन्, 'चन्दनदेशः कथमपि वशीकरणीयः' इति चिन्तयन् आसीत्।

एतस्मिन् एव सन्दर्भे चन्द्रपालः केनचित् व्याधिना पीडितः सन् शय्याम् आश्रितवान्। समर्थाः वैद्याः तस्य चिकित्सां कृतवन्तः। किन्तु सर्वं विफलं जातम्। केषुचित् एव दिनेषु सः प्राणैः वियुक्तः अभवत्।

चन्द्रपालस्य एकमात्रपुत्रः सत्यपालः। पितुः मरणस्य अनन्तरं सहजतया सः राजा अभवत्। राजत्वप्राप्तेः अनन्तरं केषुचित् एव दिनेषु सः गूढचराणां द्वारा माण्डलिकस्य जयसेनस्य, प्रतिवेशिराजस्य प्रचण्डवर्मणः च चिन्तनं ज्ञातवान्। इदानीं देशः सङ्कटपरिस्थितौ अस्ति इति ज्ञातवान् सः।

देशस्य रक्षणार्थं शीघ्रम् एव कोऽपि उपायः चिन्तनीयः इति आलोच्य सः महामन्त्रिणं कुलूकभट्टम् आहूय उक्तवान् यत् सर्वान् मन्त्रिणः मेलयित्वा देशस्य रक्षणस्य विषये उपायं चिन्तयिष्यामः इति।

तदा कुलूकभट्टः उक्तवान्– "महाराज! अस्माकं देशस्य आन्तरङ्गिकी बाह्या च समस्या अस्ति। समस्याद्वयम् अपि कठिनतरम् एव। तथापि बाह्यस्य अपायस्य निवारणार्थम् एव प्रथमं प्रयत्नः करणीयः इति मम विचारः। बाह्यापायस्य निवारणार्थं कश्चन सुलभोपायः अपि अस्ति इदानीम्" इति।

"कः सः उपायः?" इति कुतूहलेन पृष्टवान् सत्यपालः।

"मन्त्रिभिः सह समालोचनं यत् क्रियते तत् प्रायः प्रकाशितं भवति। अतः अन्यः एव उपायः आश्रयणीयः इति मम आशयः। प्रचण्डवर्मणः एकमात्रपुत्री मधूलिका। सा भवता परिणीता चेत् सर्वाः समस्याः परिहृताः भविष्यन्ति। प्रचण्डवर्मा बन्धुः भविष्यति इत्यतः ततः तु भीतिः न भवेत्। प्रचण्डवर्मणः मैत्री प्राप्ता चेत् अस्माकं सामर्थ्यं वर्धते। तत् दृष्ट्वा माण्डलिकः भिल्लराजः जयसेनः मौनं स्थास्यति। वयं तस्य सिंहासनं स्वायत्तीकृत्य तं कारागारे स्थापयितुं शक्नुमः" इति उक्तवान् कुलूकभट्टः।

तदा सत्यपालः पृष्टवान्– "प्रचण्डवर्मा



यदि मह्यं स्वपुत्रीं दातुं सिद्धः स्यात् तर्हि युद्धविचारं न अकरिष्यत् खलु?" इति।

"प्रभो, भवतः कथनं सत्यम् एव। प्रचण्डवर्मा भवते स्वपुत्र्याः दानं चिन्तयन् न स्यात् नाम। किन्तु मधूलिका भवतः परिणये उत्सुका अस्ति इति गूढचरद्वारा ज्ञातं मया। अतः गूढचरादिद्वारा एतद्विषये भवतः सहमतिः अस्ति इति वार्ता प्रेषिता चेत् सर्वं सुसम्पन्नं भवेत्। अग्रे यत् करणीयं तत् सा एव स्वयं कुर्यात्" इति उक्तवान् कुलूकभट्टः।

सत्यपालः क्षणकालस्य मौनस्य अनन्तरं मन्दहासपूर्वकं पृष्टवान्– "मधूलिका मयि अनुरक्ता इति वार्ताम् आनीतवन्तः गूढचराः सा अहङ्कारवती इत्यपि उक्तवन्तः स्युः एव



खलु?" इति।

एतं प्रश्नं श्रुतवतः कुलूकभट्टस्य मुखं विवर्णं जातम्। तथापि सः कृतकं हासं प्रदर्शयन् उक्तवान्– "सा इदानीम् अहङ्कारवती स्यात् नाम। अहङ्कारः तारुण्यसहजः। अग्रे सा आत्मानं परिवर्तयेत्" इति।

कुलूकभट्टस्य वचनं श्रुत्वा सत्यपालः मन्दहासं प्रकट्य मौनम् आश्रितवान्। तयोः समालोचनं समाप्तम्।

सत्यपालस्य मनः नितरां खिन्नम् आसीत्। समस्याभ्यः विमोचनं कथम् इति सः न जानाति स्म। अतः मनसः नैर्मल्यार्थं कदाचित् सः काञ्चनगिरिसमीपे निवसतः गुरोः समीपम् एकाकितया प्रस्थितवान्।

यदा सः गुरुकुलतः किञ्चिद्दूरे आसीत् तदा कश्चन व्याघ्रः गुल्मतः बहिः आगत्य उच्चैः गर्जनं कुर्वन् सत्यपालस्य अश्वस्य उपरि अपतत्। तस्मात् भीतः अश्वः ततः अधावत्। वायुवेगेन स्वेच्छया सः सुदूरम् अगच्छत्। अत्रान्तरे कश्चन विचित्रः ध्वनिः श्रुतः। तं ध्वनिं श्रुतवतः अश्वस्य वेगः न्यूनः जातः। अश्वः वृक्षस्य अधः अतिष्ठत्।

स च ध्वनिः सत्यपालेन पूर्वं श्रुतः आसीत् एव। उद्विग्नम् अश्वं शान्तं कर्तुं भिल्लजनाः तादृशं ध्वनिं स्वमुखेन उत्पादयन्ति स्म। 'अहम् इदानीं भिल्लराज्यपरिसरे अस्मि' इति ज्ञातवान् सः। अश्वात् अवतीर्य अग्रे किं करणीयम् इति सः चिन्तयन् क्षणकालं स्थितवान्।

तावता वृक्षाणां मध्यतः धनुर्धारी कश्चन सुन्दरः तरुणः मन्दहासं प्रकटयन् सत्यपालस्य समीपम् आगतवान्।

सत्यपालः तं परीक्षादृष्ट्या पश्यन्– "मुखेन विचित्रं शब्दम् उत्पाद्य मदीयम् अश्वं स्थगितवान् भवान् एव वा?" इति पृष्टवान्।

"आम्" इति अङ्गीकारपूर्वकं शिरः चालयन् सः युवकः– "भवान् नितरां श्रान्तः स्यात्। अतः क्षणकालं विश्रान्तिसुखम् अनुभवतु। इदानीम् अहम् आगच्छामि तावत्" इति उक्त्वा ततः गतवान्।

युवकस्य विलक्षणं स्वरूपं, विलक्षणं स्वरं

च स्मरन् सत्यपालः आश्चर्यम् अनुभवन् क्षणकालं चिन्तनं कृतवान्। ततः प्रवृत्तं तर्कयतः तस्य मुखे मन्दहासः आगतः।

अनतिकाले एव सः युवकः कानिचन फलानि स्वीकृत्य मृत्पात्रेण जलम् अपि स्वीकृत्य आगत्य सत्यपालाय दत्तवान्।

सत्यपालः तानि स्वीकृत्य– "माम् अभिज्ञाय मम सेवां भवान् यत् कुर्वन् अस्ति तदर्थं कृतज्ञः अस्मि अहम्। यदि भवान् मया सह आगच्छेत् तर्हि अहं भवते मम आस्थाने योग्यम् उद्योगं दद्याम्" इति उक्तवान्।

तदा सः भिल्लयुवकः– "श्रीमन्! भवान् दद्यात्, किन्तु अहं स्वीकर्तुं न सिद्धः। अहं मम कर्तव्यं निरूढवान्, तावदेव। प्रतिफलापेक्षा सर्वथा नास्ति मम" इति उक्त्वा गन्तुम् उद्युक्तः।

एतत् श्रुत्वा सत्यपालः कोपेन– "मां धिक्कृत्य उच्यते इव खलु? अहं सम्राट्, भवान् सामन्तराज्यीयः इति जानन् वदन् अस्ति खलु भवान्? कीदृशः अहङ्कारः भवतः?" इति पृष्टवान्।

"धाष्ट्र्यं राजकुलीयस्य गुणः। मां जयसेनपुत्रीं कीर्तिसेनां जानन् अपि भवान् माम् उद्दिश्य अहङ्कारवचनम् उक्तवान् इति अहं जानामि। मम परीक्षार्थं खलु एवं व्यवहृतं भवता? भवतः व्यवहारं जानती अहम् अपि किञ्चित् धाष्ट्र्यं प्रदर्शितवती" इति उक्तवती पुरुषवेषधारिणी राजकुमारी।



तदा सत्यपालः अपि हसन्– "राजकुमारि! अहङ्कारः धाष्ट्र्यं वा न भवत्याः शोभावहः, न वा मम। अलं चर्चया। आगच्छामि तावत्" इति उक्त्वा ततः निर्गन्तुम् उद्युक्तः।

"किञ्चित् तिष्ठतु। मया सह आगच्छतु तावत्" इति उक्त्वा ततः प्रस्थितवती कीर्तिसेना। सत्यपालः विना वचनं ताम् अनुसृतवान्।

किञ्चित्कालानन्तरं तौ स्वच्छीकृतम् एकं प्रदेशं प्राप्तवन्तौ। तत्र पुरुषप्रमाणिका शिलानिर्मिता काचित् देवीमूर्तिः आसीत्।

कीर्तिसेना सत्यपालम् उक्तवती– "एषा स्वयंशक्तिदेवी इति। अस्माकं कुलदेवता



एषा। एषा आराधिता चेत्, एतस्याः अनुग्रहः प्राप्तः चेत् सर्वाणि कष्टानि अपगतानि भवन्ति इति अस्माकं विश्वासः'' इति।

सत्यपालः तां देवीं भक्त्या नमस्कृतवान्। 'मासद्वयस्य अनन्तरम् आवाम् अत्रैव पुनर्मेलिष्यामः' इति उक्त्वा राजधानीं प्रति गतवान्।

सत्यपालेन शासनविषये केचन उग्रक्रमाः आश्रिताः। उत्कोचग्राहिणः उच्चाधिकारिणः केचन कारागारे स्थापिताः। सैनिकाः गणेषु विभक्ताः, विभिन्नप्रदेशान् प्रति प्रेषिताः च। ते सैनिकाः चोरान्, वञ्चकान्, दुष्टान् च कारागारे स्थापितवन्तः। एवं मासद्वयाभ्यन्तरे तेन शासनव्यवस्थायां स्थिताः सर्वे लोपाः निवारिताः।

पूर्वनिश्चयस्य अनुगुणं सत्यपालः स्वयंशक्तिदेव्याः आलयस्य समीपं गतवान्। तत्र कीर्तिसेना उपस्थिता आसीत्। कीर्तिसेनाम् उक्तवान् सत्यपालः– ''कीर्तिसेने, स्वयंशक्तिदेव्याः अनुग्रहतः सर्वाः समस्याः परिहृताः। सर्वाणि कष्टानि अपि अपगतानि। भवत्याः सूचनातः एव एतत्सर्वं सिद्धम्। अहं भवत्या नितराम् उपकृतः अस्मि। भवती मया सह मम राज्यम् आगत्य महाराज्ञीपदम् अलङ्कृत्य माम् ऋणमुक्तं करोतु इति प्रार्थना'' इति।

कीर्तिसेना किमपि अनुक्त्वा लज्जया शिरः अवनमय्य स्थितवती। ततः केषुचित् एव दिनेषु कीर्तिसेनायाः अग्रजः विविधैः उपायनैः सह सत्यपालसमीपम् आगत्य मम अनुजा परिणेतव्या इति प्रार्थितवान्। स्वस्य अङ्गीकारं सूचितवान् सत्यपालः।

ततः अल्पे एव काले कीर्तिसेना-सत्यपालयोः विवाहः सवैभवं सम्पन्नः।

विवाहकार्यक्रमाः यदा सम्पन्नाः तदा सत्यपालः स्वस्य श्वशुरस्य च सेनया सह मिहिरदेशस्य उपरि आक्रमणं कृतवान्।

युद्धे प्रचण्डवर्मा पराजितः अभवत्। सः सत्यपालं शरणं प्रार्थयन्– ''वत्स! सत्यपाल! हस्तच्युतं राज्यं पुनः प्राप्तव्यम् इति इच्छा नास्ति मम। किन्तु मम एकमात्रपुत्र्याः मधूलिकायाः विषये

 

विशेषचिन्ता मम। सा भवति विशेषानुरागवती अस्ति। अतः सा भवता परिणेतव्या इति मम साग्रहं निवेदनम्। मम प्रार्थनाम् अङ्गीकृत्य तां राज्ञीं करोतु कृपया" इति निवेदितवान्।

प्रचण्डवर्मणः प्रार्थनाम् अङ्गीकुर्वन् सत्यपालः मधूलिकां परिणीतवान्। ततः प्रचण्डवर्माणं सामन्तपदव्यां नियोज्य मधूलिकया सह चन्दनदेशं प्रत्यागतवान् च।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! सत्यपालस्य पिता चन्द्रपालः भोगलालसया देशस्य सुस्थितिं नाशितवान् आसीत्। कार्यदीक्षया बुद्धिमत्तया च सत्यपालः देशस्य स्थितिं समीकृतवान्। अन्यराजानां विषये अस्माकं व्यवहारः कीदृशः स्यात् इति निर्णयार्थं विशेषचातुर्यम् आवश्यकम्। किन्तु सत्यपालस्य व्यवहारे तादृशं चातुर्यं न दृश्यते। मधूलिका अनुरागवती अस्ति इति मन्त्रिणः मुखात् ज्ञात्वा अपि सत्यपालः तां परिणेतुं सिद्धः न जातः। किन्तु सः एव कीर्तिसेनायाः विषये अन्यथा व्यवहारं प्रदर्शितवान्। अन्ते मधूलिकाम् अपि परिणीतवान्। एतत्सर्वं सत्यपालस्य चाञ्चल्यं खलु प्रदर्शयति? बाह्यशत्रोः निवारणं प्रथमं कर्तव्यम्। अतः सर्वप्रथमं सत्यपालेन मधूलिका खलु परिणेतव्या आसीत्? किन्तु तेन तथा न कृतम्। एतत्सर्वं दृष्टं चेत्, यथा पिता तथा



सत्यपालः अपि राज्यपालनार्थम् अनर्हः इति एव खलु सिध्यति? मम एतस्य सन्देहस्य उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "सिंहासनप्राप्तेः अनन्तरं सत्यपालः यद्यत् कृतवान् तत्सर्वं परिशीलितं चेत् ज्ञायते यत् सः राजनीतौ महानिपुणः इति। 'आन्तरिकसमस्यायां सत्याम् अपि, बाह्यशत्रोः निवारणार्थम् एव प्रथमं प्रयत्नः करणीयः' इति मन्त्रिणा कुलूकभट्टेन यत् उक्तं तत् तिरस्कुर्वन् स्वस्य राजनीतिचातुर्यं प्रदर्शितवान् सः। प्रथमं प्रजासु राजविषये सदभिप्रायः स्यात्। प्रजाभिप्रायः अनुकूलकरः

अस्ति चेत् राज्ञः महत् बलं सिद्धम् इव। एतत् जानन् सत्यपालः सर्वप्रथमं भ्रष्टान् अधिकारिणः कारागारे स्थापयन् दुष्टान् च दण्डयन् प्रजानां प्रीतिं सम्पादितवान्। माण्डलिकस्य विरोधं शमयितुम् इच्छन् कीर्तिसेनां परिणीतवान् सः। दैववशात् कीर्तिसेनायाः मेलनं जातं, स्वस्य अनुरागं परोक्षतया निवेदयितुम् इच्छन्ती कीर्तिसेना सत्यपालं देव्याः समीपं नीतवती। ततः सहोदरं सत्यपालसमीपं प्रेषितवती च। तां परिणयन् सत्यपालः आन्तरङ्गिकीं समस्यां परिहृतवान्।

मधूलिकायाः अहङ्कारं जानाति स्म सत्यपालः। अतः मन्त्रिणा सूचितं चेदपि सः तस्याः परिणयं न अङ्गीकृतवान्। अहङ्कारवती मधूलिका चिन्तितवती आसीत् यत् युद्धे यदा मम पितुः जयः भविष्यति तदा अनुग्रहबुद्ध्या मम पिता सत्यपालं, 'मम पुत्रीं परिणयतु' इति सूचयिष्यति। तदा सत्यपालः विनयेन एतत् अङ्गीकरिष्यति इति। अतः एव सा पितुः युद्धप्रयत्नं न निवारितवती आसीत्। किन्तु सत्यपालः उपायेन शक्तिं सम्पाद्य प्रचण्डवर्माणं पराजितवान्। एवं दैववैपरीत्यतः प्रचण्डवर्मणा दैन्यं प्रदर्शितम्। मधूलिकायाः च अहङ्कारः भग्नः। प्रचण्डवर्मणि औदार्यं प्रदर्शयन् सत्यपालः तं माण्डलिकं कृत्वा तदीयां पुत्रीं परिणीय युद्धं पूर्णतः निवारितवान्। एवं सत्यपालः सिंहासनारोहणानन्तरं यानि यानि कार्याणि कृतवान् तानि सर्वाणि राजनीतिपरिणतेः द्योतकानि एव आसन्। अन्तर्विरोधं बाह्यशत्रुतां च सः उपायेन निवारितवान्। दृढतां प्रदर्शयन् शासनशुद्धिं कृतवान्। एवं सत्यपालस्य राजनीतिनिपुणता स्फुटा एव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





अस्मद्देशीया पशुपक्षिसम्पत्–

# उन्नताः सारसाः

**सा**रसपक्षिणः प्रायः समग्रे प्रपञ्चे दृश्यन्ते। बोटविल्जातीयाः आफ्रिकातः, अजुटैण्ट्जातीयाः एशियातः च भारतम् आगताः। किन्तु कृष्णकण्ठयुक्ताः तु सारसपक्षिणः भारतमूलाः एव। मानवप्रमाणकाः एते कृष्णकण्ठसारसाः सारसजातौ एव अत्युन्नताः। उन्नतौ रक्तौ च पादौ, कृष्णा दीर्घा च चञ्चूः च एतेषां वैशिष्ट्यम्। एतेषां कण्ठः अपि दीर्घः नीलहरितवर्णयुक्तः च। एतेषां कण्ठस्य अधोभागः श्वेतः भवति। श्वेतौ पक्षौ प्रसार्य एते यदा उड्डयनं कुरुतः तदा शरीरस्य कृष्णरेखां परितः या श्वेतता दृश्यते सा च नितरां मनोहरा।

एते पक्षिणः प्रायः एकाकितया निवसन्ति। विरलतया युगलरूपेण दृश्यन्ते अपि। गणरूपेण तु कदापि न दृश्यन्ते। क्षीणं गुरुशब्दम् एते उत्पादयितुं शक्नुवन्ति, न तु उच्चध्वनिम्। गभीरतारहिते जले स्थितान् मण्डूकमीनादीन् अन्यविधान् जन्तून् च एते गृहीत्वा खादन्ति। एते पक्षिणः देशस्य वायव्यप्रदेशे ईशान्यप्रदेशे च अधिकतया दृश्यन्ते। दक्षिणभारते तु एतेषां दर्शनं दुर्लभम् एव।



# आधुनिकं भारतीयसाहित्यम्

*(भारतस्य वैशिष्ट्यं यत् अत्र विभिन्नाः भाषाः विभिन्नाः संस्कृतयः च सन्ति। अत्र विभिन्नासु भाषासु बहोः कालतः समृद्धस्य साहित्यस्य निर्माणं प्रचलति। प्राचीनग्रन्थानां विषये, तन्निरूपितकथावस्तुविषये च वयं किञ्चित् अधिकं वा जानीयाम कदाचित्, किन्तु आधुनिकानां महाग्रन्थानां विषये अत्यल्पम् एव जानीमः। अतः चन्दमामा इतः परं विभिन्नभाषासु रचितानां कथाग्रन्थानां कथासारम् अत्र परिचाययति। अत्र कथा संक्षेपेण दीयते। तथापि अस्माकं विश्वासः अस्ति यत् एतस्य पठनेन भवन्तः अवश्यं सन्तुष्टाः स्युः इति। यदि शक्यं तर्हि मूलग्रन्थं तदनुवादं वा पठित्वा भारतीयस्य उत्कृष्टसाहित्यस्य स्पष्टं परिचयं प्राप्नुवन्तु इति निवेद्यते।)*

## प्रेमचन्दविरचितः 'गोदान'ग्रन्थः



अयोध्यासमीपस्थे बेलारीनामके ग्रामे होरीरामः नाम कश्चन निर्धनः कृषिकः निवसति स्म। काचित् धेनुः क्रेतव्या इति तस्य महती इच्छा, किन्तु तदर्थम् आवश्यकं धनं तु नास्ति तस्य समीपे। तस्मिन् एव ग्रामे निवसतः भोलनामस्य पत्नी दिवङ्गता। सः अन्यां कन्यां परिणेतुम् इष्टवान्। सः होरीरामाय एकां धेनुम् ऋणरूपेण दत्त्वा उक्तवान् यत् कन्यान्वेषणे भवान् मम साहाय्यं करोतु इति।

भोलस्य गृहतः यदा धेनुः होरीरामस्य गृहम् आगता तदा काश्चन समस्याः अपि उद्भूताः। होरीरामस्य पुत्रः गोबरः धेनुम् आनेतुं भोलस्य गृहं गतः, तदीयां बालविधवां पुत्रीं झुनियां दृष्टवान्, तस्याम् अनुरक्तः अभवत् च। ततः अल्पे एव काले गोबरः झुनियां रहसि परिणीतवान् अपि।

होरीरामस्य गृहं प्रति आगतां धेनुं दृष्ट्वा विमातृपुत्रः हीरः ईर्ष्यावान् जातः। कदाचित् सः धेनवे विषमिश्रितम् आहारं दत्तवान्। धेनुः मृता। किन्तु एवं विषाहारदानसमये हीरः गृहीतः अपि। दण्डभीत्या हीरः ग्रामं परित्यज्य पलायनं कृतवान्।

गोबर-झुनिययोः विवाहः कदाचित् प्रकटितः अभवत्। ग्रामीणाः सम्भूय निर्णयं श्रावितवन्तः यत् विधवायाः परिणयः, तत्रापि मातापितरौ यथा न जानीतः तथा परिणयः पापाय इति। तथापि होरीरामस्य पत्नी धनिया स्नुषायां झुनियायां प्रीतिं प्रदर्शितवती। सा स्नुषायै स्वगृहे आश्रयं दत्तवती। एतेन क्रुद्धः भोलः होरीरामं साग्रहम् उक्तवान् यत् झुनिया गृहात् निष्कासनीया इति। किन्तु होरीरामः एतत् श्रुत्वा अपि अश्रुतवान् इव स्थितवान्। एतेन भोलः इतोऽपि क्रुद्धः। सः होरीरामं कठोरम्



उक्तवान् यत् मत्तः स्वीकृतायाः (अनन्तरं मृतायाः) धेन्वाः मूल्यं मह्यं ददातु इति। रिक्तहस्तः होरीरामः धनं कथं वा दद्यात्? अन्ते भोलः होरीरामस्य वृषभौ स्वगृहं नीतवान्।

गोबरः लक्ष्मणपुरम् आगतवान्। तत्र सः धनसम्पादनम् अपि किञ्चित् कृतवान्। ततः सः ग्रामं प्रत्यागतवान्। ग्रामीणाः तस्य प्रशंसां कृतवन्तः। भोलः होरीरामाय वृषभौ प्रत्यर्पितवान्।

झुनिया पत्या सह नगरम् आगतवती। किन्तु तस्यै नगरजीवनं न अरोचत। तस्याः प्रथमशिशोः मरणं जातम्। गोबरः यन्त्रागारे उद्योगं प्राप्तवान्। सः प्रतिदिनं सायं सुरां पीत्वा गृहम् आगत्य पत्नीं पीडयितुम् आरब्धवान्। यन्त्रागारे कर्मकराः वेतनम् अधिकम् अपेक्षमाणाः कार्यं स्थगितवन्तः। पक्षद्वयस्य कलहे गोबरः व्रणितः। झुनिया श्रद्धया पतिसेवां कृत्वा पतिं स्वस्थं कृतवती। एतेन गोबरः मनःपरिवर्तनं प्राप्य पत्नीं प्रीत्या दृष्टवान्। ततः सः प्रसिद्धसमाजसेविकायाः वैद्यायाः गृहस्य उद्यानपालत्वेन नियुक्तः अभवत्। गोबरस्य द्वितीयं पुत्रं सा वैद्या पोषितवती।

ग्रामे होरीरामस्य जीवनं महता कष्टेन प्रचलति स्म। ज्येष्ठपुत्र्याः विवाहस्य निमित्तं तेन ऋणं कृतम्। द्वितीयां पुत्रीं रूपां कस्मैचित् विधुराय धनिकाय दातुम् सः उद्युक्तः अभवत्। रूपा तु एतेन किञ्चिदपि न खिन्ना। प्रत्युत सम्पत्तेः स्वामिनी भवामि इति तस्याः सन्तोषः एव। विवाहानन्तरं सा पितृगृहं प्रति एकां धेनुं प्रेषितवती।

एतावता पाषाणच्छेदनादीनि कार्याणि कृत्वा होरीरामः नितराः शक्तिहीनः जातः। तदीयं मरणम् आसन्नम्। मरणसमये तेन किञ्चिदिव तृप्तिः प्राप्ता, यतः पूर्वं गोहत्यां कृत्वा पलायितवान् तदीयः सहोदरः हीरः प्रत्यागत्य भ्रातरं क्षमां प्रार्थितवान्। गोबरस्य द्वितीयः पुत्रः होरीरामस्य मनः तोषयति स्म।

मरणोन्मुखः होरीरामः पत्नीं धनियाम् उक्तवान् यत् आत्मशान्तिनिमित्तं गोदानं करणीयम् इति। किन्तु तत्समये धनियायाः हस्ते रूप्यकद्वयमात्रम् आसीत्। सा तदेव नाणकद्वयं पत्युः शीतलहस्तस्य उपरि स्थापितवती, ब्राह्मणम् उक्तवती च— एतत् नाणकद्वयम् एव गोदानप्रतीकं मत्वा स्वीकरोतु इति। एतावत् उक्त्वा सा तत्रैव मूर्च्छां गतवती।

गोदाननामकस्य कथाग्रन्थस्य सारः एषः। एतदतिरिच्य अस्मिन् ग्रन्थे बह्व्यः रोचकघटनाः सन्ति। ताश्च यथा— धनिक-निर्धनव्यवहारवर्णनं, तृष्णायुतानां कपटव्यवहारः इत्यादयः। ग्रामीणजीवनस्य यथावत् चित्रणम् एतस्य ग्रन्थस्य वैशिष्ट्यम्।

प्रेमचन्दवर्यस्य जन्म १८८० तमे वर्षे वाराणस्यां जातम्। सः उर्दूभाषां फारसीभाषां च अधीतवान्। ततः सः उर्दूभाषया कृतीः रचितवान्। कालान्तरे हिन्दीभाषया अपि रचितवान्। भारतकथासाहित्यस्य अग्रणीषु अन्यतमः प्रेमचन्दः इत्यत्र तु न अतिशयोक्तिः। प्रेमचन्दः १९३६ तमे वर्षे परं धाम गतवान्।

# भवन्तः जानन्ति वा?

१. १५ शतके विद्यापतिः नाम वैष्णवकविः आसीत्। सः कया भाषया ग्रन्थं रचितवान्?
२. ऋषिमुनयः यस्मिन् अरण्ये निवसन्ति स्म, तच्च अरण्यं केन नाम्ना आहूयते स्म?
३. कश्चन मुनिः वेगेन वहन्तीं गङ्गानदीं पीतवान्, कर्णद्वारा बहिः निस्सारितवान् च इति श्रूयते। एतत्कारणतः गङ्गया नूतनं नाम प्राप्तम् अपि। एवं तर्हि तस्य मुनेः नाम किम्?
४. भारतस्य भूतपूर्वः प्रधानमन्त्री लालबहादुरशास्त्री १९६६ तमे वर्षे केन मेलितुं ताष्केण्ट्नगरं गतवान् आसीत्?
५. थानेश्वर-कन्नौजसमीपे राजानं हर्षवर्धनं कः दाक्षिणात्यः राजा जितवान्?
६. सः भारतीयः शिल्पी कः, यस्य च नाम क्रि.पू. ५ शतके एव ग्रन्थे उल्लिखितं दृश्यते?
७. महाभारतकथायां जनमेजयेन कृतात् सर्पयागात् आत्मानं रक्षित्वा पलायितवतः सर्पराजस्य नाम किम्?
८. पारसीकजनाः ऋतूनाम् उपकारं स्मरन्तः कृतज्ञतापूर्वकं कञ्चन उत्सवम् आचरन्ति। तस्य नाम किम्?
९. 'एकलव्य'प्रशस्तिः 'राज्ञीलक्ष्मी'प्रशस्तिः च कस्याः क्रीडायाः निमित्तं दीयते?
१०. भारते किं रैल्यानं बहूनि राज्यानि स्पृशत् गच्छति?
११. केरलराज्ये स्थितेन 'तेल्लिच्चेरि' प्रदेशेन भारताय कीदृशम् अपूर्वम् उपायनं समर्पितम्?
१२. भारतीयशैल्या एव 'फरक्का बैरेज्' निर्मितम् आसीत् पूर्वम्। तच्च केन उद्देशेन कृतम् आसीत्?
१३. अजन्तचित्राणि 'कुड्यचित्राणि' इति प्रसिद्धानि। तेषां वैशिष्ट्यं किम्?
१४. श्रीपेरम्बदूरनगरे, यत्र च राजीवगान्धेः हननं जातं, कः सुप्रसिद्धः सज्जनः जन्म प्राप्तवान् आसीत्?
१५. शिवमन्दिरेषु नटराजस्य शिवस्य मन्दिरं नितरां सुप्रसिद्धम्। तच्च कुत्र अस्ति?

## उत्तराणि

१. ब्रजबोली भाषया।
२. तपोवनम् इति नाम्ना।
३. जह्नुः इति। ततः गङ्गायाः जाह्नवी इति नाम।
४. पाकिस्थानाध्यक्षेण अयूबखानवर्येण।
५. द्वितीयः पुलिकेशी।
६. महागोविन्दः। 'धम्मपद'ग्रन्थे।
७. तक्षकः इति।
८. गाँबुबर्स् इति।
९. खो-खो क्रीडार्थम्।
१०. 'हिमगिरि-एक्सप्रेस्'नामकं, यच्च जम्मूतः कन्याकुमारीं प्रति गच्छति। एतत् यानं तमिलनाडु, केरलं, आन्ध्रप्रदेशं, महाराष्ट्रं, मध्यप्रदेशम्, उत्तरप्रदेशं, हरियाणां, यूनियन् टेरिटरी आफ् देहली, जम्मू-काश्मीरं च स्पृशति।
११. अस्माकं देशे सर्कस् तेल्लिच्चेरीनगरे एव प्रारब्धम्। ततः बहवः सर्कस्कलाकाराः निर्मिताः।
१२. कलकत्तानगरस्य महानौकाघट्टस्य गभीरतायाः वर्धनार्थम्।
१३. तानि च चित्राणि पर्वतगुहाभित्तिषु चित्रितानि।
१४. रामानुजाचार्यवर्यः।
१५. 'चिदम्बर'नामके नगरे।



# योग्यः दण्डः

रुद्रपुरनामके ग्रामे तिरुमलेशः नाम कश्चित् निवसति स्म। ये तस्य साहाय्यं प्रष्टुम् आगच्छन्ति तान् हानिकारकं मार्गाम् उपदिशति स्म सः। ते यदा कष्टम् अनुभवन्ति तदा एषः सन्तोषम् अनुभवति स्म।

तस्मिन् ग्रामे चलपतिः नाम कश्चित् आसीत्। कदाचित् चलपतिः केनचित् रोगेण पीडितः।

वैद्यः चलपतिं परीक्ष्य उक्तवान्– 'कृष्णतुलसीसस्यस्य अञ्जलिपरिमितं रसं यदि भवान् पिबति, तर्हि भवतः रोगः अपगच्छति। कृष्णतुलसीसस्यानि तिरुमलेशस्य गृहे केवलं सन्ति'' इति।

चलपतेः पुत्रः तिरुमलेशस्य गृहं गत्वा उक्तवान्– ''मम पिता अस्वस्थः अस्ति। अतः कानिचन कृष्णतुलसीपर्णानि आवश्यकानि'' इति।

तदा तिरुमलेशः उक्तवान्– ''हन्त! कृष्णतुलसीपर्णनिष्कासनम् अतीव पापकरम् भोः। मम गृहे अहं तादृशं पापकार्यं न करोमि। अस्य ग्रामस्य श्रेष्ठिनः आपणे कृष्णतुलसीबीजानि लभ्यन्ते। भवान् ततः बीजं क्रीत्वा गृहस्य पुरतः आरोपयतु। सस्यं यदा वर्धते तदा तेन औषधं निर्मातुं शक्यते'' इति।

चलपतेः पुत्रः निराशया प्रत्यागतवान्। तदारभ्य सः यान् यान् पश्यति, तान् सर्वान् कृष्णतुलसीविषये प्रष्टुम् उद्युक्तः अभवत्। एतेषु एव दिनेषु कदाचित् कश्चन संन्यासी मिलितवान्। सः संन्यासी चलपतेः पुत्रस्य समस्यां ज्ञात्वा– ''तिरुमलेशः उत्तमम् उपायम् एव सूचितवान् अस्ति। गृहं गत्वा तथैव करोतु। बीजं यत्र आरोपयति तत्र अनुक्षणम् एव सस्यं वर्धते'' इति उक्त्वा




गतवान्।

संन्यासिनः वचनं श्रुत्वा चलपतेः पुत्रः उत्साहेन आपणतः कृष्णतुलसीबीजं क्रीत्वा गृहस्य पुरतः आरोपितवान्। अनुक्षणम् एव सर्वाणि बीजानि अङ्कुरितानि, वृक्षतुल्यानि अपि जातानि। तुलसीरससेवनेन चलपतेः रोगः अपगतः।

अनन्तरं कदाचित् संन्यासी चलपतेः समीपम् आगत्य उक्तवान्– ''तिरुमलेशस्य वचनानुसारमेव आचरितम्। अतः एव भवतः रोगः अपगतः। भवान् गत्वा तं धन्यवादवचनानि उक्त्वा आगच्छतु। अग्रे भवतः जीवनस्य उन्नत्यर्थं कः उपायः इत्यपि तिरुमलेशं पृष्ट्वा आगच्छतु। तावत्पर्यन्तम् अहम् अत्रैव भवामि'' इति।

अनन्तरं चलपतिः तिरुमलेशस्य गृहं गत्वा जीवनस्य उन्नतिविषये पृष्टवान्। तदा तिरुमलेशः उक्तवान्– ''भवतः गृहे विद्यमानं धनं सर्वं गोण्यां बद्ध्वा भवतः गृहस्य पुरतः निखनतु। तत् धनं वृक्षरूपेण वर्धते, फलरूपेण धनं ददाति च'' इति।

चलपतिः गृहम् आगत्य तिरुमलेशेन यत् उक्तं तत् संन्यासिनं निवेद्य– ''सः अतीव दुष्टः। मम धनं सर्वं नाशयितुम् इच्छति सः'' इति उक्तवान्।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान्– ''भवान् इतोऽपि तिरुमलेशस्य महिमानं न जानाति। अतः एवं वदति। मयि विश्वासं स्थापयतु। तिरुमलेशः यथा वदति, तथैव करोतु'' इति।

चलपतिः तथैव कृतवान्। तस्याम् एव रात्रौ चलपतेः गृहस्य समीपे नाणकानां वृक्षः उत्पन्नः फलितः च। वृक्षस्य सर्वासु शाखासु अपि नाणकानि लम्बमानानि आसन्। तदा संन्यासी उक्तवान्– ''वृक्षेषु विद्यमानानि नाणकानि स्वीकृत्य चिरकालं सुखेन जीवतु। श्वः रात्रितः पूर्वं एषः नाणकवृक्षः तुलसीसस्यं च अदृश्यौ भविष्यतः'' इति।

तदा चलपतिः संन्यासिनं नमस्कृत्य उक्तवान्– ''स्वामिन्, भवतः प्रभावतः एव एतत् सर्वं प्रवृत्तम्। तिरुमलेशः एव महान् इति वृथा भवान् तस्य प्रशंसां कुर्वन् अस्ति।

अत्र किं कारणम् इति यदि भवान् वदेत्, तर्हि उपकृतः भवेयम्'' इति। तदा संन्यासी– ''भवान् तिरुमलेशम् अन्यथा चिन्तितवान्। सः अतीव सज्जनः'' इति उक्त्वा ततः गतवान्।

चलपतिः संन्यासिनः वचनं श्रुत्वा चकितः। 'संन्यासिनः आशयः कः इति न ज्ञायते। तिरुमलेशः यादृशः वा भवतु, तेन मम का हानिः?' इति चिन्तयन् चलपतिः वृक्षे विद्यमानानि नाणकानि उत्पाट्य सुरक्षितं स्थापितवान्। स्वभावतः सज्जनः चलपतिः यथाशक्ति अन्येषां साहाय्यं कुर्वन् जीवनं यापयति स्म।

कानिचन दिनानि अतीतानि। एकस्मिन् दिने नारायणः नाम कश्चन चलपतेः समीपम् आगत्य उक्तवान्– ''तिरुमलेशः ग्रामे नास्ति। अतः भवतः समीपे आगन्तव्यम् आपतितम्। मह्यं दश रूप्यकाणि ऋणरूपेण आवश्यकानि'' इति।

तदा चकितः चलपतिः उक्तवान्– ''मह्यं धनम् आवश्यकम् इति साक्षात् कथनं विना तादृशस्य दुष्टस्य प्रशंसां करोति किल!'' इति।

तदा नारायणः खेदेन उक्तवान्– ''एतावत्पर्यन्तम् अपि भवान् सज्जनः इति चिन्तितवान् आसम् अहम्। यदा धनसाहाय्यं पृच्छामः तदा अनुक्षणम् साहाय्यं करोति तिरुमलेशः। तादृशस्य तिरुमलेशस्य निन्दनं सर्वथा अनुचितम् एव'' इति।

अनन्तरं चलपतिः मौनं नारायणाय धनं



दत्त्वा प्रेषितवान्। तिरुमलेशस्य स्वभावविषये ग्रामे सर्वान् विचारितवान्। तदा ज्ञातं यत् तिरुमलेशः उत्तमां कीर्तिं सम्पादितवान् अस्ति इति। 'मम केवलं तिरुमलेशः दुष्टः इव भाति। तर्हि मयि एव काऽपि न्यूनता स्यात्। अथवा उपकारबुद्ध्या एव तिरुमलेशः मह्यम् उत्तमां सूचनां दत्तवान् स्यात्। अहम् एव अन्यथा चिन्तितवान् स्याम्' इति चिन्तितवान् चलपतिः।

अनन्तरदिने तिरुमलेशः प्रवासतः प्रत्यागतवान्। तदा चलपतिः तस्य समीपं गत्वा उक्तवान्– "भवता दीयमानाः सूचनाः उत्तमाः भवन्ति इति संन्यासी उक्तवान् आसीत्। किन्तु तदा तस्मिन् वचने मम विश्वासः न आसीत्। इदानीं वस्तुस्थितिः ज्ञाता मया। क्षन्तव्यः अहम्" इति।

तदा तिरुमलेशः उक्तवान्– "भोः, एतत्सर्वं तस्य संन्यासिनः कारणतः एव सम्पन्नम्। सः पुनः कदाचित् अस्मद्ग्रामम् आगमिष्यति चेत् मां वदतु तावत्। सः यदा अस्मद्ग्रामम् आगत्य गतवान् तदारभ्य मया सूच्यमानाः मार्गाः फलप्रदाः जायमानाः सन्ति। ततः जनाः प्रभूतं लाभं प्राप्नुवन्ति। एतत् मम इष्टाय न। अतः जनाः यदा मम समीपम् आगच्छन्ति तदा ते यावत् प्रार्थयन्ति तावत् धनं ददामि। एतेन तेषां लाभे न्यूनता भवति। ततः काचित् तृप्तिः मम। यदि अहं मार्गदर्शनं अकरिष्यं तर्हि ते अधिकं लाभं प्राप्स्यन्। अतः मार्गदर्शनकरणं सर्वथा परित्यक्तवान् अस्मि। यावत् सः संन्यासी न मेलिष्यति तावत् एवम् एव दिनानि यापनीयानि मया" इति।

अन्येषां लाभः न्यूनः भवतु इति उद्देशेन स्वसम्पत्तिम् अपि व्ययीकर्तुं सिद्धः तिरुमलेशः। किन्तु मार्गोपदेशेन जनानां हितं कर्तुं तु सर्वथा न इच्छति सः। 'तिरुमलेशस्य कुत्सितबुद्धिं दृष्ट्वा एव संन्यासी योग्यं दण्डं विहितवान् अस्ति' इति ज्ञात्वा चलपतिः तृप्त्या ततः स्वगृहं गतवान्।



# र स वा र्ता:



## पर्वतारोहणं कृतवन्तः अन्धाः

महाराष्ट्रियाः दश अन्धाः तरुणाः हिमालयपर्वतम् आरोढुं गताः। तेषु त्रयः १७,२२० पादोन्नतं शितिधरशिखरम् आरोढुं समर्थाः अभवन्। अन्धैः एतावदुन्नतं पर्वतशिखरम् आरूढं यत् तत् महत् साहसकार्यम्। तेषु एकः अन्धः तु मूकः बधिरः चापि आसीत्। दार्जीलिङ्गुनगरस्था 'हिमालयन् मौण्टानीयरिंग् इन्स्टिट्यूट्' नामिका संस्था एतेषां पर्वतारोहणप्रशिक्षणव्यवस्थां निरूढवती आसीत्।

## अहो, नाम्नां क्लेशः!

चीनदेशस्य जनसङ्ख्या विंशतिलक्षाधिक-सप्तोत्तरशत-कोटिमिता स्यात्। किन्तु अत्र प्रायः विंशतिलक्षाधिक-सप्तकोटिजनानां 'वाङ्ग्' इत्येव नाम! परस्पराभिज्ञाने तु महान् क्लेशः। गतेभ्यः २००० वर्षेभ्यः एकाक्षरयुक्तानि उपनामानि अनुवर्तमानि सन्ति। एतस्य परिवर्तनार्थं प्रयत्नः प्रचलति। तदर्थं प्रख्यातनाम्ना सह समाननाम्नः उच्चारणं क्रियते। तद्यथा– 'वाङ्ग्-जुन्, 'वाङ्ग् झाङ्ग्' इत्यादीनि। एतेन क्रमेण 'शान्डांग्'प्रदेशीयानां २८०० जनानां नामानि परिवर्तितानि। एवं कृते अपि महान् लाभः तु न जातः। यतः ली, लु, झाङ्ग् इत्यादिभिः समाननामभिः युक्ताः तत्र २५ कोटिजनाः स्युः!







## अत्यल्पवयस्कः स्नातकः

इंग्लेण्ड्देशे इदानीम् अत्यल्पवयस्कः स्नातकः गणेश सिर्टम्बलम्, यश्च भारतीयमूलः अस्ति। एषः गते जुलैमासे सर्रेविश्वविद्यालयतः गणितशास्त्रे प्रथमश्रेण्या आनर्स्पदवीं प्राप्तवान्। इतः पूर्वं तु 'अत्यल्पवयस्का स्नातिका' इति कीर्तिं रूस् लारेन्स्, यदा सा सप्तमासाधिकत्रयोदशवर्षीया आसीत् तदा, प्राप्तवती आसीत्। गणेशः इदानीं गणिते विशेषाध्ययनं कर्तुं न इच्छति। तस्य विचारः अस्ति यत् १६ वर्षे जि.सि.एस्.ई. (जनरल् सर्टिफिकेट् इन् स्कूल् एज्युकेषन्) परीक्षायाम् उत्तीर्य एव सर्रेविश्वविद्यालयः प्रवेष्टव्यः इति। सः विनोदार्थं बि.एस्.सी. परीक्षार्थं गतः आसीत्। तेनैव तेन अपूर्वा कीर्तिः प्राप्ता।



# दुर्व्यसनिनः साक्ष्यम्

कश्चन वणिक् कदाचित् अश्वम् आरुह्य कस्यचित् कार्यस्य निमित्तं नगरं प्रति गच्छन् आसीत्। यदा सः कञ्चित् ग्रामं प्राप्तवान् तदा अन्धकारः प्रसृतः। वणिक् निश्चितवान् यत् रात्रिः अत्रैव यापिता चेत् वरम् इति। यावत् सः चिन्तयन् आसीत् तावता तत्र कम्पमानः कश्चन आगतः। सः वणिजम् उक्तवान्– "श्रीमन्! अहं मादकद्रव्यव्यसनी अस्मि। दिनद्वयतः मया एकं नाणकम् अपि न प्राप्तम्। भवान् यदि मह्यं चत्वारि आणकानि दद्यात् तर्हि अहं नितराम् उपकृतः स्याम्। धनाभावे तु मम मरणं निश्चितम्" इति।

वणिक् विना वचनं तस्मै कानिचन आणकानि दत्तवान्। स च मादकद्रव्यव्यसनी ततः निर्गतवान्। वणिक् कस्यचित् गृहस्य पुरतः स्थित्वा आश्रयं प्रार्थितवान्। गृहस्वामी रात्रौ तत्र वासार्थम् अनुमतिं दत्तवान्।

गृहस्य पुरतः बन्धनकीलके अश्वं बद्ध्वा वणिक् अन्तः सुखेन निद्रां कृतवान्। प्रातः उत्थाय सः यावत् ततः निर्गन्तुम् उद्युक्तः तावता अश्वं स्वीकृत्य कुत्रापि गच्छन्तं गृहस्वामिनं दृष्टवान्।

आश्चर्यम् अनुभवन् वणिक् गृहस्वामिनम् उक्तवान्– "श्रीमन्! कृपया मम अश्वं कुत्रापि मा नयतु" इति।

एतत् श्रुत्वा गृहस्वामी उक्तवान्– "एषः अश्वः मम। मम गृहस्य पुरतः स्थितं बन्धनकीलकं प्रतिदिनम् एकम् अश्वं प्रसूते" इति।

"श्रीमन्! मम अश्वस्य अपहरणार्थं प्रयत्नं कुर्वन् अस्ति भवान्" इति कोपेन उक्तवान् वणिक्।

तदा धूर्तः सः गृहस्वामी उक्तवान्– "मम गृहस्य बन्धनकीलकं प्रतिदिनम् एकैकम् अश्वं प्रसूते इति तु समग्रे ग्रामे प्रसिद्धम्। यदि मम वचने सन्देहः स्यात् तर्हि ग्रामीणान्

पृच्छतु" इति।

तस्मिन् ग्रामे धूर्तगृहस्वामिसदृशाः अन्ये अपि केचन वञ्चकाः आसन्। ते आगत्य गृहस्वामिना उक्तं वचनं समर्थितवन्तः।

अनन्योपायः वणिक् ग्रामप्रमुखस्य समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान्। ग्रामप्रमुखः तं गृहस्वामिनम् आहूय पृष्टवान्– "वणिक् एषः यत् वदति तत् सत्यं वा?" इति।

तदा गृहस्वामी विनयेन उक्तवान्– "श्रीमन्! मम गृहस्य पुरतः स्थितं बन्धनकीलकं प्रतिदिनम् एकम् अश्वं प्रसूते इति तु ग्रामीणाः सर्वे जानन्ति। आवश्यकं चेत् अहम् एतस्य साक्षिणः आनेतुं शक्नोमि" इति।

तदा ग्रामप्रमुखः वणिजम् उक्तवान्– "स च अश्वः भवदीयः एव इति प्रमाणयितुं कोऽपि साक्षी अस्ति वा? साक्षी यदि स्यात् तर्हि न्यायनिर्णयः क्रियते मया" इति।

तदा वणिक् मार्गे मिलितं मादकद्रव्यव्यसनिनं स्मृतवान्। तस्य अन्वेषणार्थं सः ततः निर्गतवान्। गृहस्वामी अपि साक्षिणः आनेतुं ततः गतवान्।

सर्वत्र अटित्वा मादकद्रव्यव्यसनिनम् अन्विष्टवान् वणिक्। मदजाततन्द्रायां निमग्नं तम् उत्थाप्य प्रवृत्तं सर्वम् उक्तवान् सः। तदा सः मादकद्रव्यव्यसनी उक्तवान्– "श्रीमन्, अश्वम् अहं प्रतिदापयामि। चिन्तां परित्यजतु भवान्" इति उक्त्वा वणिजा सह ग्रामप्रमुखसमीपं गतवान्।

तावता गृहस्वामी अपि साक्षिभिः सह तत्र



उपस्थितः आसीत्। तेन आनीताः साक्षिणः उक्तवन्तः- "गृहस्वामी यत् वदति तत् सत्यम्, तस्य गृहस्य पुरतः स्थितं बन्धनकीलकं प्रतिदिनम् एकम् अश्वं प्रसूते इति तु सत्यम् एव" इति।

साक्षिरूपेण मादकद्रव्यव्यसनिनम् आनीतवन्तं वणिजं दृष्ट्वा ते उक्तवन्तः– "कुतः प्राप्तः भवता एषः साक्षी? दुर्व्यसनासक्तस्य एतस्य वचने को वा विश्वसिति?" इति।

तं मादकद्रव्यव्यसनिनं दृष्ट्वा ग्रामप्रमुखः पृष्टवान्– "अये, भवतः मुखदर्शनात् ज्ञायते यत् मदच्छाया इतोऽपि न अपगता इति। एतादृशस्य भवतः वचनं कथं प्रमाणत्वेन अङ्गीकरोमि?" इति।

तदा मादकद्रव्यव्यसनी उक्तवान्– "श्रीमन्! मम मुखे मदच्छाया नास्ति। अहम् आरात्रि सरोवरस्य अन्तः स्थित्वा अग्निं प्रज्वाल्य मीनानां भर्जनं कृतवान्। मध्ये अल्पा अपि विश्रान्तिः न आसीत्। निद्राभावतः अहं नितरां श्रान्तः अस्मि। अतः मम मुखे श्रान्तिः दृश्यते, न तु मदच्छाया" इति।

एतत् श्रुत्वा तत्र सम्मिलिताः सर्वे हसितवन्तः। ग्रामप्रमुखः तम् उक्तवान्– "भवतः एतस्य वचनस्य श्रवणात् सिद्ध्यति यत् भवान् मदोन्मादेन युक्तः अस्ति इति। उन्मत्तस्य वचनं कथं वा प्रमाणं स्यात्? सरोवरस्य अन्तः अग्निः कथं ज्वालयितुं शक्यः? सर्वम् असम्बद्धम्" इति।

तदा मादकद्रव्यव्यसनी उक्तवान्– "श्रीमन्! यदि बन्धनकीलकम् अश्वम् उत्पादयेत् तर्हि सरोवरस्य अन्तः अग्निः कथं न ज्वलेत्? यदि सरोवरे अग्निज्वलनम् असम्भवं तर्हि कीलकस्य अश्वप्रसूतिः अपि असम्भवा एव स्यात्" इति।

एतत् श्रुतवतः ग्रामप्रमुखस्य शिरः लज्जया अवनतम् अभवत्। सः गृहस्वामिनं सम्यक् निन्दित्वा योग्येन दण्डेन दण्डितवान्। वणिजे तदीयम् अश्वं दापितवान्। मादकद्रव्यव्यसनिनः प्रशंसां कृतवान् च।





# वीरः हनूमान्

हनूमान् पर्वतानां मध्ये ओषधीनाम् अन्वेषणं कृतवान्। तेषु पर्वतेषु बहूनि सस्यानि आसन्। सर्वाणि सस्यानि समानानि आसन्। अतः सञ्जीवनीसस्यादीनि कानि इति ज्ञातुं न शक्तवान् हनूमान्। त्वरया तानि सस्यानि नेतव्यानि आसन् तेन। किन्तु तानि कानि इत्येव न ज्ञायते! आत्मनः असहायकतां स्मरन् क्रुद्धः अभवत् सः। क्रुद्धः सः समग्रं पर्वतम् एव उत्पाट्य हस्तेन गृहीतवान्, ततः निर्गतवान् च।

महान्तं पर्वतम् उन्नीय आगच्छन्तं हनूमन्तं दृष्ट्वा सर्वे वानराः नितरां सन्तुष्टाः। सन्तोषभरेण ते कूर्दनं कृतवन्तः, नृत्यं कृतवन्तः च। वानराणां सिंहनादः सर्वत्र व्याप्तः। एतत् दृष्ट्वा हनूमान् स्वयम् अपि हूँकारं कृतवान्। ततः अनतिकाले सः अधः आगतवान्। पर्वतशिखरम् एकत्र संस्थाप्य हनूमान् वानरप्रमुखान् नमस्कृतवान्। विभीषणम् आलिङ्गितवान् च।

ओषधिपर्वततः यः वायुः वाति तस्य सेवनतः रामः लक्ष्मणः च सचेतनौ जातौ। व्रणादिरहितौ सन्तौ सन्तोषेण उत्थितवन्तौ। तस्मिन् एव काले मूर्च्छिताः वानराः अपि एकैकशः उत्थितवन्तः। ओषधीनां प्रभावतः मृताः वानराः अपि सजीवाः जाताः। तेषां शरीराणां व्रणादयः सर्वे उपशान्ताः।

एवं वानरपक्षीयाः मृताः सर्वे सजीवाः जाताः। किन्तु ओषधिसस्यानां प्रभावतः राक्षसाः तु न उज्जीविताः। तत्र कारणम् अपि आसीत्। रावणः इच्छति स्म यत् मत्पक्षीयाः

२८. इन्द्रजिता कृतः होमः।



वानरवीराः लङ्काप्रवेशं कुर्युः इति'' इति।

सूर्यास्तः जातः। सर्वत्र अन्धकारः अपि प्रसृतः। वानरवीराः दीपान् गृहीत्वा लङ्कां प्रति गतवन्तः। लङ्काद्वारे रक्षणार्थं स्थिताः राक्षसभटाः वानरसेनां दृष्ट्वा नितरां भीताः, ततः पलायितवन्तः च। इदानीं वानरवीराणाम् अवरोद्धारः एव न सन्ति। ते नगरद्वाराणि भवनानि च अग्निना दहन्तः अग्रे गतवन्तः। एवं बहूनि गृहाणि दग्धानि अभवन्। गृहस्य अन्तः स्थितानि अमूल्यानि वस्तूनि अपि दग्धानि अभवन्। बहवः राक्षसाः अपि दग्धाः जाताः। वानराणां हर्षध्वनिना राक्षसानाम् आर्तनादेन स च प्रदेशः व्याप्तः।

कति मृताः इति अन्ये न जानीयुः इति। अतः सः मृतानां राक्षसानां शरीराणि समुद्रे क्षिपति स्म। अतः अमूल्यानाम् ओषधिसस्यानां सम्पर्कं प्राप्य अपि राक्षसपक्षेण कोऽपि लाभः न प्राप्तः।

यदा ओषधिसस्यानाम् आवश्यकता समाप्ता तदा जाम्बवान् सूचितवान् यत् पर्वतशिखरं स्वस्थाने स्थापयित्वा आगच्छतु इति। तदनुगुणं हनूमान् स्वस्थाने स्थापयित्वा रामलक्ष्मणयोः समीपम् आगतवान्।

तदा सुग्रीवः हनूमन्तम् उक्तवान्– ''कुम्भकर्णः मृतः। रावणपुत्राः अपि मृताः। अतः रावणः इदानीं युद्धार्थं न आगच्छति एव। मम तु विचारः यत् अद्य रात्रौ बलशालिनः

एतावता राक्षससेना वानरवीरान् सम्मुखीकर्तुं सिद्धा जाता। किन्तु तया एतत्सन्दर्भे लङ्कायाः अन्तः एव शत्रुः सम्मुखीकरणीयः आसीत्।

''भवन्तः रावणभवनस्य समीपं गत्वा राक्षसान् सम्मुखीकुर्वन्तु'' इति वानरवीरान् आज्ञापितवान् सुग्रीवः। तदनुगुणं वानरवीराः रावणभवनस्य समीपं गत्वा युद्धं कृतवन्तः। स्वभवनस्य पुरतः स्थित्वा युद्धं कुर्वतः वानरवीरान् दृष्ट्वा रावणः नितरां क्रुद्धः जातः। सः कुम्भकर्णपुत्रौ कुम्भं निकुम्भं च युद्धार्थं प्रेषितवान्। ताभ्यां सह यूपाक्षं, शोणिताक्षं, प्रजङ्घं, कम्पनं चापि प्रेषितवान् सः।



उभयपक्षीयाः अपि उत्साहेन युद्धं कृतवन्तः। अङ्गदः कम्पनं लीलया मारितवान्। ततः शोणिताक्षस्य हस्ते स्थितं खड्गं बलात् आकृष्य तेनैव खड्गेन तं संहृतवान्। एवं राक्षसवीरद्वयं संहृत्य अन्यान् संहर्तुं सः अग्रे गतवान्। प्रजङ्घः अपि तेन मारितः। यूपाक्षं मैन्दः यमसदनं प्रेषितवान्।

कुम्भेन सह युद्धं कुर्वन् अङ्गदः मूर्च्छां गतवान्। एतत् ज्ञात्वा रामः अङ्गदस्य साहाय्यार्थं जाम्बवदादीन् प्रेषितवान्। किन्तु कुम्भः तथा बाणवर्षणं करोति स्म यत् बाणभित्तिं भित्वा अग्रे गन्तुं कोऽपि न शक्तवान्। एतत् दृष्ट्वा सुग्रीवः अग्रे आगत्य कुम्भस्य बाणान् छिन्दन् समीपं गतवान्। सः कुम्भस्य धनुः बलात् आकृष्य विच्छिद्य क्षिप्तवान्। ततः सुग्रीव-कुम्भयोः बाहुयुद्धम् आरब्धम्। एतस्मिन् युद्धे कुम्भः यमलोकं गतवान्।

सहोदरस्य मरणं श्रुत्वा निकुम्भः क्रुद्धः सन् परिघायुधं परितः भ्रामयन् अग्रे आगतवान्। अभिमुखं दृष्टं हनूमन्तम् उरसि प्रहृतवान्। एतेन तत् परिघायुधं च्छिन्नं सत् अधः अपतत्। किन्तु हनूमता तु महती वेदना अनुभूता। एतेन क्रुद्धः हनूमान् मुष्ट्या निकुम्भस्य उरसि प्रबलं प्रहारं दत्तवान्। एतेन मुष्टिप्रहारेण निकुम्भः रक्तं वमन् मूर्च्छां प्राप्य अधः अपतत्। क्षणाभ्यन्तरे सः पुनरपि सचेतनः सन् उत्थाय हनूमतः उपरि आक्रमणं कृतवान्। तदा हनूमान् महत् उग्रं रूपं प्राप्य निकुम्भं गले गृहीत्वा उन्नीय परितः भ्रामितवान्। अन्ते शिरः शरीरात् पृथक्कृत्य अक्षिपत् च। एवं निकुम्भस्य वधः जातः।

कुम्भ-निकुम्भयोः मरणं श्रुत्वा रावणः अश्रूणि स्रावितवान्। ततः सः खरस्य पुत्रं मकराक्षं युद्धार्थं प्रेषितवान्। रणरङ्गम् आगतः मकराक्षः रामेण हतः अभवत्। एतां वार्तां श्रुत्वा क्रुद्धः रावणः इन्द्रजितम् आहूय आज्ञापितवान् यत् भवान् त्वरया रणरङ्गं गच्छतु इति। इन्द्रजित् एतत् अङ्गीकुर्वन् होमं कर्तुं यागभूमिं गतवान्। एतत् दृष्ट्वा तत्रत्याः राक्षसस्त्रियः ऋत्विजां धरणार्थं रक्तवर्णीयानि वस्त्राणि आनीतवत्यः।



इन्द्रजिता क्रियमाणः होमः नितरां विचित्रः आसीत्। तत्र दर्भाणां स्थाने आयुधानि उपयुज्यन्ते स्म। समिधां स्थाने च तिलवृक्षशाखादयः उपयुज्यन्ते स्म। स्रुक्स्रुवादीनां निमित्तम् अयोमयानि पात्राणि उपयुज्यन्ते स्म। ऋत्विजः सर्वे रक्तवस्त्रं धृतवन्तः आसन्। जयसूचकः अग्निः धूमं विना ज्वलति स्म। एवं होमं कृत्वा इन्द्रजित् देवदानवराक्षसादीन् तर्पितवान्। अनन्तरं अदृश्यतां प्राप्तुं समर्थं रथम् आरुह्य ततः निर्गतवान्। स च रथः श्वेतवर्णेन सूर्यः इव राजते स्म।

इन्द्रजित् अन्तर्हितः सन् रणरङ्गं गतवान्। तत्र सः वानराणां मध्ये स्थितौ रामलक्ष्मणौ अभिज्ञातवान्। ततः तयोः उपरि बाणवर्षणं कृतवान्। रामलक्ष्मणौ अपि निरन्तरं बाणान् प्रयुक्तवन्तौ। किन्तु तेन इन्द्रजित् किञ्चिदपि न व्रणितः। प्रत्युत इन्द्रजितः बाणानां कारणतः रामलक्ष्मणौ एव बहुधा व्रणितौ।

रामलक्ष्मणौ इन्द्रजितः बाणान् निरन्तरं खण्डितवन्तौ। एवं कृते अपि इन्द्रजितः बाणानां कारणतः वानराणां पक्षे बहुधा हानिः जाता।

एतत् दृष्ट्वा लक्ष्मणः रामं पश्यन् महता कोपेन उक्तवान्– "अग्रज! ब्रह्मास्त्रप्रयोगेण इदानीं सर्वान् राक्षसान् संहरिष्यामि" इति।

तदा रामः निराकरणपूर्वकम् उक्तवान्– "लक्ष्मण! एकस्य निमित्तं एतस्मिन् लोके स्थितानां सर्वेषां राक्षसानां संहारः न उचितः। आवाम् इन्द्रजितः मारणार्थं प्रयत्नं करवाव! दिव्यास्त्राणां प्रयोगं कृत्वा कार्यं साधयाव" इति।

अत्रान्तरे नूतनं कञ्चित् उपायं चिन्तयित्वा इन्द्रजित् युद्धभूमितः प्रतिगतवान्। अल्पे एव काले मायासीतां रथे आरोप्य प्रत्यागतवान्। 'रामलक्ष्मणयोः वानराणां च पुरतः मायासीतां मारयित्वा तेषु भीतिः उत्पादनीया' इति इन्द्रजितः चिन्तनम् आसीत्।

युद्धभूमिं प्रति पुनरपि आगतवन्तम्

इन्द्रजितं दृष्ट्वा हनूमान् क्रुद्धः सन् उन्नतं पर्वतशिखरम् उत्पाट्य उन्नीय इन्द्रजितः समीपम् आगतवान्। तदा सः इन्द्रजितः रथे रुदतीम् उपविष्टां सीतां दृष्टवान्। कृशां दीनां सीतां दृष्टवतः हनूमतः नेत्राभ्याम् अश्रूणि आगतानि। सः दुःखविह्वलः सन् वानरान् पृष्टवान्– "इन्द्रजित् सीतां किमर्थम् अत्र आनीतवान् स्यात्?" इति।



एतस्य उत्तरं वक्तुं कोऽपि वानरः न शक्तवान्। हनूमान् खेदेन उद्वेगेन च इन्द्रजितः उपरि आक्रमणं कृतवान्। तम् अनुसरन्तः इतरे वानराः अपि अग्रे गतवन्तः। वानरसेना यदा समीपम् आगता तदा इन्द्रजित् मायासीतायाः केशं मुष्ट्या गृहीतवान्। विविधैः प्रकारैः तां पीडयितुम् उद्युक्तः अभवत् अपि।

"अये नीच! कीदृशं कुकृत्य भवतः? किं वीरयोग्यं कार्यं वा एतत्? अबलायाः उपरि हस्तं प्रसारयतः भवतः कीदृशी लज्जाकरी प्रवृत्तिः एषा? सीतायाः हानिं कृत्वा किं भवान् जीवेत्? कदापि न। अहं भवन्तं यमसदनं प्रेषयिष्यामि। लङ्कानगरीम् एव नाशयिष्यामि। धिक् भवन्तम्! धिक् भवतः कुकृत्यम्!" इति क्रोधेन उक्तवान् हनूमान्।

इन्द्रजितः समीपम् आगतां वानरसेनां राक्षससेना धैर्येण न्यवारयत्। इन्द्रजित् हनूमन्तम् उद्दिश्य– "अये! वानर! एतस्याः सीतायाः निमित्तं खलु भवता रामेण सुग्रीवेण वानरसेनया च आगतम्? ताम् इदानीं भवतां पुरतः एव मारयिष्यामि। ततः रामं, लक्ष्मणं, सुग्रीवं, भवन्तं, द्रोहिणं विभीषणं च मारयिष्यामि। स्त्री न मारणीया इति भवतः आशयः स्यात्। किन्तु युद्धे शत्रुधैर्यनाशकानि सर्वाणि अपि कार्याणि युक्तानि एव भवन्ति" इति उक्त्वा खड्गप्रहारेण मायासीतायाः कण्ठं कर्तितवान्। ततः विकटाट्टहासं कृतवान् च। एतम् अट्टहासं श्रुत्वा सर्वे वानरभटाः भीत्या ततः पलायितवन्तः।

तदा हनूमान् तेषां पलायनं निवारयन्– "मित्राणि! भवतां प्रतापः शूरत्वं धैर्यं च कथं लुप्तम्? शूराः कदापि रणरङ्गात् न



पलायन्ते! पलायनं नितराम् अपमानकरम्। किं भवन्तः वीराः न? किं भवतां बाहवः शक्तिहीनाः जाताः? अलं धावनेन। धैर्येण अग्रे सरन्तु" इति उक्त्वा वानरान् पुनरपि युद्धे प्रेरितवान्।

वानराणाम् अग्रणीः सन् हनूमान् राक्षसानां संहारं कर्तुम् उद्युक्तः अभवत्। राक्षसानां यमः आसीत् सः।

सः एकां बृहतीं शिलाम् उन्नीय इन्द्रजितः रथं लक्ष्यीकृत्य क्षिप्तवान्। किन्तु तावता इन्द्रजितः सारथिः युक्त्या रथं पार्श्वे नीतवान्। अतः रथः तु न भग्नः। किन्तु बहवः राक्षसाः मृताः अभवन्। वानरवीराः अपि बहून् राक्षसान् धैर्येण मारितवन्तः। इन्द्रजितम् उद्दिश्य बाणान्, शिलाः, अन्यविधानि आयुधानि च क्षिप्तवन्तः। शिलावर्षणम् एव कृतवन्तः। तदा इन्द्रजित् रौद्ररूपं प्राप्य वानराणां संहारं कृतवान्। एतत् दृष्टवतां राक्षसानाम् उत्साहः प्रवृद्धः।

तदा हनूमान् राक्षसान् सम्मुखीकुर्वन्, तान् निरन्तरं निवारयन् वानरान् उक्तवान्– "वयं सीतायाः निमित्तम् एतावद्दूरम् आगतवन्तः। किन्तु सा सीता एव इदानीम् अत्र नास्ति। एवं स्थिते किं युद्धेन? राक्षसाः जीवन्तु, मृताः भवन्तु वा, किं तेन? अतः इतः गत्वा रामं सुग्रीवं च सर्वं निवेद्य तयोः यथा आदेशः तथा करवाम" इति।

एतावत् उक्त्वा हनूमान् प्रतिप्रस्थितवान्। एतत् दृष्ट्वा इन्द्रजित् होमार्थं निकुम्भिळायागस्थलं प्रति प्रस्थितवान्। मन्त्रान् पठन् मांसम् आहुतिरूपेण अर्पयन् रक्तधारां घृतरूपेण अर्पयन् सः होमं कृतवान्।

अत्रान्तरे रामः वानराणां राक्षसानां च युद्धकोलाहलं श्रुत्वा, 'एतत्सर्वं हनूमतः साहसस्य फलम्' इति चिन्तयित्वा सहाय्यार्थं जाम्बवन्तं प्रेषितवान्। रामस्य आज्ञां शिरसा वहन् जाम्बवान् हनूमतः साहाय्यार्थं सेनया सह पश्चिमद्वारसमीपं गतवान्।

किन्तु तावता प्रतिगमनं निश्चित्य हनूमान् ततः प्रस्थितः आसीत्। सः भल्लूकसेनां जाम्बवन्तं च प्रतिगन्तुम् उक्तवान्। अनन्तरं

सपरिवारं रामसमीपम् आगतवान्। अश्रुपूर्णनेत्रः सः सगद्गदं सीतासंहारवार्तां रामं निवेदितवान्।

एतां वार्तां श्रुत्वा धीरः अपि रामः अधीरतां प्राप्य अधः अपतत्। तत् दृष्ट्वा श्रुत्वा च सर्वे वानराः तत्र धावन्तः आगतवन्तः। केचन सुगन्धजलसेचनेन रामं सचेतनं कृतवन्तः।

लक्ष्मणः रामम् आलिङ्ग्य सान्त्वनवचनानि उक्तवान्– "अग्रज! भवान् धर्ममार्गम् अनुसरन् पितृवाक्यपरिपालनं कृतवान्। राज्यं सिंहासनं राजभोगं च परित्यक्तवान्। कैकेयीं दशरथं वा न निन्दितवान्। एवं बहुधा धर्मः आचरितः चेदपि भवतः कष्टपरम्परा न समाप्यते। धर्मः भवन्तं न रक्षति। अधर्मावलम्बी रावणः तु सुखेन तिष्ठति। लोके धर्मस्य सदा पराजयः एव। अधर्मस्य एव जयः" इति।

तावता विभीषणः रामलक्ष्मणयोः समीपम् आगतवान्। 'इन्द्रजिता कृतं मायासीतावधं श्रुत्वा एव एते एवं दुःखिताः सन्ति' इति ज्ञातवान् सः।

सः अग्रे गत्वा रामम् उक्तवान्– "राम! सीतासंहारवार्ता सर्वथा मिथ्या। सीता प्रत्यर्पणीया इति वचनं तिरस्कृतवान् रावणः किं सीतायाः वधम् अङ्गीकुर्यात्? कदापि न। इन्द्रजित् होमं कृत्वा अपूर्वं सामर्थ्यं प्राप्तुम् इच्छति। होमसमये वानराः विघ्नं कुर्युः इति आलोच्य मायासीतां सृष्ट्वा संहृतवान् सः। इदानीं सः यागभूमौ अस्ति। यदि तस्य यागः निर्विघ्नं परिसमाप्येत तर्हि तं जेतुं देवा अपि न शक्नुयुः। अतः इन्द्रजितः यागस्य समाप्तेः पूर्वम् एव अस्माभिः ससैन्यं गत्वा आक्रमणं करणीयम्। कथमपि यागे विघ्नः उत्पादनीयः। राम! भवान् शुभवार्तां निरीक्षमाणः अत्रैव तिष्ठतु। अस्माभिः सह लक्ष्मणं प्रेषयतु। वयं सर्वे सम्भूय इन्द्रजितः यागे विघ्नम् उत्पादयिष्यामः। ततः लक्ष्मणः तस्य संहारं करिष्यति। इन्द्रजित् संहृतः चेत् रावणः सर्वथा शक्तिहीनः भविष्यति" इति।





# विचित्रः अनुभवः

वज्रागारपुरे पूर्वं वरदराजः नाम कश्चन वणिक् आसीत्। वाणिज्यक्षेत्रे तेन महती प्रसिद्धिः प्राप्ता आसीत्। पितुः मरणस्य अनन्तरं सः परम्पराप्राप्तं समग्रं वाणिज्यं सम्यक् निर्वहन् वर्धितवान् आसीत्। अत्रान्तरे तस्य मातृभगिन्याः पुत्र्याः विवाहः निश्चितः। तस्य पत्नी भानुमती गर्भिणी आसीत्। गर्भिणीं ताम् एकाकिनीं गृहे त्यक्त्वा विवाहार्थं गन्तुं न इच्छति स्म वरदराजः। वाणिज्यभारः तु आसीत् एव।

पत्युः विचारं ज्ञात्वा पत्नी भानुमती उक्तवती– "आर्य! आवाभ्याम् उभाभ्याम् अपि वस्तुतः तत्र उपस्थातव्यम् आसीत् खलु? किन्तु मम तु प्रसवदिनानि आसन्नानि। अतः भवान् वा अवश्यं गच्छतु। मद्विषये चिन्तां मा करोतु। यदि विशेषसाहाय्यं किमपि आवश्यकं स्यात् तर्हि प्रतिवेशिनः अवश्यं सहकुर्युः" इति।

पत्न्याः धैर्ययुक्तानि वचनानि श्रुत्वा वरदराजः विवाहार्थं गन्तुं मतिं कृतवान्, भाटकशकटेन विवाहस्थलं प्रति प्रस्थितवान् च। मध्ये अरण्यम् अतिक्रमणीयम् आसीत् तेन। मध्याह्नसमये शकटम् अरण्यप्रदेशं प्राप्नोत्। तत्समये शकटचालकस्य मातुलः तत्र उपस्थितः अभवत्। सः शकटचालकस्य मातुः मरणस्य वार्तां निवेद्य शकटचालकम् उक्तवान् यत् भवता त्वरया ग्रामं प्रति गन्तव्यम् इति। ततः शकटचालकं कानिचन सान्त्वनवचनानि उक्त्वा सः वरदराजम् उक्तवान्– "श्रीमन्! एतस्य मातुः शवः एतेन एव चिताम् आरोपणीयः। अतः एतेन अवश्यं प्रतिगन्तव्यम्। भवान् अत्रैव तिष्ठतु। अल्पेन एव कालेन अपरं शकटं प्रेषयिष्यामः" इति। ततः तौ शकटे उपविश्य वेगेन प्रतिगतवन्तौ।

अनन्योपायः वरदराजः मार्गपार्श्वे



स्थितस्य वृक्षस्य अधः उपविष्टवान्। स्यूतम् उपधानीकृत्य शयनं कृतवान् च। अल्पे एव काले सः निद्रावशं गतः। यदा तेन नेत्रे उन्मीलिते तदा सर्वत्र अन्धकारः प्रसरन् आसीत्। आकाशः मेघैः आवृतः आसीत्। तदा तदा विद्युत् स्फुरति स्म अपि। शकटचालकबन्धुना प्रेष्यते इति यत् उक्तं तत् शकटं तु तावता अपि न आगतम् आसीत्। स्वस्य दौर्भाग्यं निन्दन् वरदराजः ततः वेगेन प्रस्थितवान्। तावता वृष्टिः आरब्धा एव।

अत्रान्तरे अनतिदूरात् एव हस्ततालपूर्वकं कथयतः कस्यचित् ध्वनिः श्रुतः– "श्रीमन्, तिष्ठतु। वृष्टौ कियद्दूरं गन्तुं शक्नुयात् भवान्? अत्र आगत्य किञ्चित्कालं तिष्ठतु" इति।

अरण्ये अकस्मात् एतं ध्वनिं श्रुत्वा वरदराजः आश्चर्यचकितः भीतः च। ध्वनिः यतः आगतः तस्यां दिशि सः दृष्टिं प्रसारितवान्। तत्र जीर्णं किञ्चन मन्दिरम् आसीत्। जीर्णमन्दिरस्य पुरोभागे कश्चन मानवाकारः दृश्यते स्म। सः च मानवाकारः पुनरपि– "श्रीमन्! भीतिः मास्तु। अहं न राक्षसः, न वा पिशाचः। भवान् इव अहम् अपि कश्चन मानवः एव। आगच्छतु तावत् अत्र" इति उच्चध्वनिना आह्वयत्।

वरदराजस्य इतोऽपि सन्देहः पूर्णतः न अपगतः। सः इष्टं दैवं स्मरन् जीर्णमन्दिरस्य समीपं गतवान्। छदिकारणतः मन्दिरस्य पुरोभागे जलं तु न पतति स्म। सः मन्दिरस्थः पुरुषः किञ्चित् स्थलं स्वच्छीकृत्य– "आगच्छतु श्रीमन्, उपविशतु। एतेन मार्गेण आगच्छन् वृष्टितः रक्षणार्थम् अहम् अत्र आगतः। मम नाम चन्द्रशेखरः इति। उद्योगान्वेषणं कुर्वन् कश्चन निरुद्योगी अहम्। भवान् तु धनिककुलजातः इति भाति। अत्र उपविशतु तावत्" इति हसन् उक्तवान्।

चन्द्रशेखरेण यः आदरः प्रदर्शितः तेन सन्तोषम् अनुभवन् उपविशन् वरदराजः साभिमानम् उक्तवान्– "वरदराजः नाम वणिक् अहम्। वज्रागारपुरे स्थितेषु वणिक्षु श्रेष्ठः अहम् एव" इति।

उभौ अपि किञ्चित्कालं मौनम् उपविष्टवन्तौ। वृष्टिस्थगनसूचना तु सर्वथा न आसीत्। इतोऽपि अधिककालं मौनं स्थातुम् अनिच्छन् चन्द्रशेखरः उक्तवान्– "कुत्रापि स्थितयोः आवयोः अत्र एतादृशे सन्दर्भे मेलनं विचित्रं खलु? एतादृशः अन्यः अनुभवः भवता जीवने कोऽपि प्राप्तः चेत् वदतु तावत्, येन समयः सुखेन यापितः भवेत्" इति।

वृष्टिसमये रात्रौ मौनम् उपवेशनं वरदराजस्य अपि इष्टं न आसीत्। अतः सः क्षणकालं विचिन्त्य उक्तवान्– "त्रिंशद्वर्षीयस्य मम जीवने घटिता काचित् विशिष्टा घटना सदा मनसि तिष्ठति। तां श्रावयामि। सा घटना विचित्रा वा न वा इति भवान् एव वदतु" इति।

ततः तेन सा घटना निरूपिता– "पूर्वम् अहं नगरे पठन् आसम्। तदा राजशेखरो नाम कश्चित् मम आत्मीयः आसीत्। अहं विद्याभ्यासं मध्ये समाप्य ग्रामं प्रत्यागत्य पितुः वाणिज्ये साहाय्यं कर्तुम् उद्युक्तः अभवम्। किन्तु यदा यदा नगरं गच्छामि स्म तदा राजशेखरेण अवश्यं मिलामि स्म।

एवं कदाचित् अहं यदा नगरं गतवान् तदा राजशेखरः 'भगिन्याः निमित्तं योग्यः वरः प्राप्तः अस्ति' इति निवेद्य– "मित्र! वरः तु सुयोग्यः। किन्तु तदीयौ मातापितरौ वरदक्षिणारूपेण दशसहस्रं रूप्यकाणि



इच्छतः। तावत् धनं नास्ति इति मम पिता चिन्ताक्रान्तः अस्ति। मम अपि एषा एव चिन्ता" इति उक्तवान्।

मित्रस्य चिन्तां श्रुत्वा अहम् उक्तवान्– "मित्र! चिन्ता मास्तु। तावत् धनम् अहं दास्यामि। यदा शक्यते तदा तत् धनं प्रत्यर्पयतु" इति।

एतावत् उक्त्वा अहं स्वग्रामं प्रत्यागतवान्। पितरं सर्वं निवेदितवान् च।

एतत् श्रुत्वा मम पिता महता क्रोधेन– "अये मन्दबुद्धे! स्नेहकारणतः दाक्षिण्यतः च धनस्य अपव्ययं करोति चेत् वाणिज्यं कथं प्रचलेत्? निर्धनः भविष्यति भवान्" इति तर्जितवान्। तथापि अहम् दृढस्वरेण



उक्तवान् यत् दशसहस्रं रूप्यकाणि आवश्यकानि एव इति।

तदा मम पिता– "तर्हि एवं करोतु। विंशतिवर्षेभ्यः पूर्वं मित्राय रामचन्द्रनामकाय पञ्चसहस्रं रूप्यकाणि ऋणरूपेण दत्तवान् आसम्। तस्य वृद्धिधनम् एव इदानीं बहु प्रवृद्धम्। भवान् ततः दशसहस्रं रूप्यकाणि वा प्रतिसङ्गृह्य स्वमित्राय दातुम् अर्हति" इति उक्त्वा रामचन्द्रस्य तद्ग्रामस्य च विवरणम् उक्त्वा मां प्रेषितवान्।

अहं दिनद्वयं यावत् प्रयाणं कृत्वा सायङ्कालसमये रामचन्द्रस्य ग्रामं प्राप्तवान्। यदा अहं रामचन्द्रस्य गृहं गतवान् तदा तत्र बहवः जनाः सम्मिलिताः दृष्टाः। किं जातम् इति अजानन् अहं जनानां मध्ये प्रविश्य अग्रे गतवान्। तत्र आश्चर्यकरं दृश्यम्! कटस्य उपरि रामचन्द्रस्य शवम् आसीत्। शवस्य पार्श्वे विंशतिवर्षीया तरुणी रुदती उपविष्टा आसीत्। एतत् दृश्यं दृष्टवतः मम धैर्यं सर्वथा नष्टम्।

मां रामचन्द्रस्य बन्धुं भावयन्तः ग्रामीणाः– "समये देवेन प्रेषितः इव भवान् उपस्थितः। सूर्यास्तात् पूर्वं शवसंस्कारः करणीयः। अन्यः बन्धुः कोऽपि नास्ति। इदानीं भवता एव शवसंस्कारः करणीयः" इति उक्त्वा मद्द्वारा शवसंस्कारं कारितवन्तः।

एवम् अनिवार्यतया मया शवसंस्कारः कृतः। अनन्तरदिने रामचन्द्रस्य पुत्री भानुमती करौ योजयित्वा मां नमस्कृत्य– "श्रीमन्! भवान् कः इति अहं न जानामि। किन्तु भवतः साहाय्यं तु अपूर्वम्। देवेन एव भवान् प्रेषितः। साक्षात् देवः एव भवान्" इति अश्रूणि स्रावयन्ती उक्तवती।

रामचन्द्रः ग्रामे बहुभ्यः जनेभ्यः ऋणं स्वीकृतवान् आसीत्। अतः अहं स्वकण्ठे स्थितस्य सुवर्णहारस्य, अङ्गुल्यां स्थितस्य अङ्गुलीयकस्य च विक्रयणं कृत्वा सर्वेभ्यः ऋणं प्रत्यर्पितवान्। अनन्तरं अहं भानुमतीम् उक्तवान्– "अत्र भवती एकाकिनी कथं वासं करिष्यति? अहं भवत्याः पितुः मित्रस्य पुत्रः। अतः भवती मया सह मद्ग्रामम् आगच्छतु"

इति।

भानुमती एतं प्रस्तावम् अङ्गीकृतवती। किन्तु ग्रामीणाः एतत् न अङ्गीकृतवन्तः। "बन्धुत्वरहितेन केनचित् धनिकपुत्रेण सह एतां कथं वा प्रेषयितुं शक्नुयाम? एवं प्रेषणम् अस्माकं ग्रामस्य एव अपमानाय। अतः भवान् एतां परिणयतु। आत्मना सह स्वग्रामं नयतु च" इति उक्तवन्तः ते।

अनन्तरं द्वित्रेषु एव दिनेषु शुभे मूहूर्ते वेणुगोपालस्वामिमन्दिरे अहं भानुमतीं परिणीतवान्। अनन्तरं भानुमत्या सह स्वग्रामं गतवान्।

एवं पूर्वं दत्तस्य ऋणस्य प्रतिसङ्ग्रहार्थं गतः अहं विशिष्टपरिस्थित्या प्रभावितः सन् स्वस्य आभरणानि विक्रीय ऋणस्वीकर्त्रा कृतानि अन्यानि ऋणानि प्रत्यर्प्य अनाथा-परिणयपूर्वकं प्रभूतायाः वरदक्षिणायाः स्वीकरणावकाशात् वञ्चितः अभवम्। एषा एव मम जीवनस्य अपूर्वा घटना" इति।

एतत् श्रुत्वा चन्द्रशेखरः सन्तोषं प्रकटयन्— "अहो, अपूर्वा घटना! जानपदकथासु यथा भवति तथैव घटना घटिता भवतः जीवने" इति।

एतत् प्रशंसावचनं श्रुत्वा वरदराजः अपि सन्तोषं प्रकटयन्— "वृष्टिस्थगनसूचना तु न दृश्यते एव। अतः भवतः जीवनस्य विचित्रां घटनाम् अपि श्रावयतु" इति उक्तवान्।

तदा चन्द्रशेखरः— "निरुद्योगी सन्



निराशया दिनानि यापयतः मम जीवने कः विचित्रः अनुभवः स्यात्? नीरसं जीवनं मम। भवान् तु धनिकः। भवान् यदि कृपया मह्यं कमपि उद्योगं दद्यात् तर्हि अहम् अनुगृहीतः भवेयम्" इति उक्तवान्।

एतत् श्रुतवतः वरदराजस्य मुखं रक्तं जातम्। सः कोपमिश्रितेन स्वरेण— "इदानीम् एव मम आधीन्ये दश उद्योगिनः सन्ति। इतोऽपि अधिकतया उद्योगिनाम् आवश्यकता नास्ति मम। तत्रापि प्रामाणिकताम् अपरीक्ष्य कस्मैचित् अपि अहम् उद्योगं न दास्यामि" इति उक्तवान्।

अत्रान्तरे कस्यचित् शकटस्य आगमनशब्दः श्रुतः। वरदराजः झटिति अग्रे

गत्वा शकटं स्थगयित्वा शकटम् आरुह्य ततः निर्गतवान्।

प्रातःकाले सः विवाहस्थलं गतवान्। विवाहकार्यक्रमं समाप्य अनन्तरदिने प्रातः गृहं प्रत्यागतवान्। पत्युः आगमनं दृष्ट्वा द्वारम् उद्घाटयन्ती पत्नी भानुमती सन्तोषेण– "भवता सर्वदा उल्लिख्यमानः भवतः मित्रं राजशेखरः ह्यः रात्रौ आगतः आसीत्। योग्येन आतिथ्येन तं सत्कृत्य पार्श्वप्रकोष्ठे शयनार्थं व्यवस्थां कृतवती अस्मि" इति निवेदितवती।

महता सन्तोषेण वरदराजः पार्श्वप्रकोष्ठं गतवान्। किन्तु तत्र कोऽपि न आसीत्। मञ्चस्य उपरि एकं पत्रं स्थापितम् आसीत्। पत्रे एवं लिखितम् आसीत्–

"वरदराजवर्य! अहं चन्द्रशेखरः, न तु राजशेखरः। भवान् मम प्रामाणिकतायां सन्देहं प्रकटयन् मह्यम् उद्योगस्य दानं निराकृतवान्। अस्तु तावत्, भवता अरण्ये उक्तायां कथायां भवदात्मीयस्य राजशेखरस्य प्रस्तावः आसीत्। तदाधारेण अहं भवतः गृहम् आगत्य आत्मानं राजशेखरं वदन् भवतः पत्न्याः विश्वासं सम्पादितवान्। भवतः पत्नी माम् आदरेण सत्कृतवती। अहं भवतः धनपेटिकातः दशसहस्रं रूप्यकाणि स्वीकृतवान् अस्मि। एतस्य धनस्य साहाय्येन किमपि वाणिज्यम् आरभ्य धनं सम्पाद्य भवदीयम् ऋणं प्रत्यर्पयिष्यामि। परह्यः भवता यदा पृष्टं तदा मम जीवने विचित्रा घटना काऽपि न आसीत्। एषा एव मम जीवनस्य विचित्र घटना" इति।

तत्रैव स्थिता भानुमती पतिं पृष्टवती– "भवतः, आत्मीयः किमपि अनुक्त्वा एव निर्गतः खलु? पत्रे किं लिखितम् अस्ति?" इति।

"विशेषः कोऽपि नास्ति। मम बुद्धिहीनतां सप्रमाणम् उल्लिख्य प्रामाणिकता नाम का इति सूचितवान् अस्ति सः" इति उक्त्वा तत् पत्रं पेटिकायां सुरक्षितं स्थापितवान् वरदराजः।





# वचनपरिपालकः

अब्दुल्हमीद्नामकः कश्चन वणिक् पूर्वं तुर्कदेशे निवसति स्म। सः वृद्धः जातः आसीत्। तस्य समीपे एकः उत्तमः अश्वः आसीत्। अश्वः सुन्दरः आसीत्, धावने अतिसमर्थः आसीत् अपि। हमीदः तम् अश्वं महत्या प्रीत्या पश्यति स्म। किन्तु अश्वम् आरुह्य प्रयाणं कर्तुं तस्य वृद्धस्य सामर्थ्यं न आसीत्। अतः अश्वस्य विक्रयणं करणीयम् इति सङ्कल्पितवान् सः।

एवं स्थिते कदाचित् अजीजः नाम युवकः तस्य समीपम् आगत्य विनयेन नमस्कृत्य उक्तवान्– "श्रीमन्! उच्चकुले जन्म प्राप्य अपि दैवविकोपकारणतः इदानीं दुःस्थितौ स्थितः कश्चन मन्दभाग्यः अहम्। भवतः अश्वः मम इष्टाय अभवत्। किन्तु अश्वस्य मूल्यं दातुं मम सामर्थ्यं नास्ति इदानीम्। अनुग्रहबुद्ध्या भवता यदि मह्यम् अश्वः दीयेत तर्हि देश-विदेशेषु सञ्चारं कृत्वा अहं धनं सम्पादयेयम्। एकवर्षाभ्यन्तरे यावत् सम्पादितं तावत् भवते अर्पयिष्यामि। वर्षान्ते अवश्यं प्रत्यागमिष्यामि। अतः मयि विश्वस्य अश्वदानेन अहम् अनुग्रहणीयः" इति।

हमीदः क्षणकालं विचिन्त्य, अश्वम् अजीजाय यच्छन् उक्तवान्– "अस्तु मित्र! भवतः वचने विश्वस्य अश्वं यच्छामि। नयतु तावत्" इति।

अजीजः सन्तोषेण अश्वम् आरूढवान्, वेगेन ततः निर्गतवान् च। कानिचन दिनानि प्रयाणं कृत्वा सः एकं नगरं प्राप्तवान्।

सः राजमार्गेण गच्छन् आसीत्। यदा सः राजभवनस्य पुरतः गच्छन् आसीत् तदा महाराजस्य दृष्टिः तदीयस्य अश्वस्य उपरि पतिता। राजा झटिति भटं सम्प्रेष्य अजीजं स्वसमीपम् आनायितवान्। पृष्टवान् च–

"तुर्कदेशीया जानपदकथा"



अज़ीजः ततः निर्गतवान्। राजा मन्त्रिणः आहूय पृष्टवान्– "एतस्मात् तरुणतः न्यूनमूल्येन अश्वं प्राप्तुं कः उपायः?" इति।

मन्त्रिणः तु स्वविचारानुगुणम् एकैकम् उपायं सूचितवन्तः। किन्तु एकः अपि उपायः राज्ञे न अरोचत। अन्ते मुख्यः मन्त्री राजानम् उक्तवान्– "प्रभो, श्वः प्रातः यदा सः तरुणः अत्र आगमिष्यति तदा भवान् राजकुमार्या सह गत्वा तेन सह मूल्यविषये चर्चां करोतु। राजकुमारी यत् मूल्यं वदति तेन मूल्येन सः अश्वं दद्यात् एव। एषः अपि उपायः यदि न फलेत् तर्हि दण्डोपायं कञ्चित् चिन्तयाम" इति।

मुख्यमन्त्रिणः सूचना राज्ञे अरोचत। सः अनन्तरदिने भटान् आज्ञापितवान् यत् यदा सः तरुणः आगमिष्यति तदा तं अन्तःपुरोद्यानं प्रति नयन्तु इति। मूल्यप्रस्तावतः पूर्वम् उपायेन वशीकर्तुम् इच्छन् सः राजकुमारीम् एकाकिनीं तत्र प्रेषितवान्।

"भवान् केन मूल्येन एतम् अश्वं विक्रेतुम् इच्छति?" इति।

तदा अजीजः राजानम् उक्तवान्– "प्रभो! अपूर्वः अश्वः एषः। एतस्य मूल्यं नवशतं दीनाराः। तावत् धनं दत्तं चेत् इदानीम् एव अश्वं दातुं सिद्धः अहम्" इति।

अजीजः अत्यधिकं मूल्यं वदन् अस्ति इति राज्ञः विचारः। किन्तु कथञ्चित् अश्वः अवश्यं प्राप्तव्यः इति तु प्रबला इच्छा। अतः सः अजीजम् उक्तवान्– "भोः, भवता उक्तं मूल्यम् अत्यधिकम्। मया विचिन्त्य निर्णयः वक्तव्यः। अतः श्वः भवान् अत्र पुनः आगच्छतु। तदानीं मूल्यनिश्चयं करवाव" इति।

अजीजः यदा अश्वम् आरुह्य पुष्पोद्यानम् आगतवान् तदा राजकुमारी शिलामण्डपे उपविष्टवती आसीत्। सौन्दर्यखनी इव स्थितां राजकुमारीं दृष्टवतः अजीजस्य हृदये कम्पनम् उत्पन्नम्। राजकुमारी अपि सुन्दरं तं युवकं दृष्ट्वा आकृष्टा अनुरक्ता च अभवत्। सा चिन्तितवती यत् एतस्य उत्कृष्टस्य अश्वस्य स्वामी एषः सुन्दरः तरुणः एव भवितुम् अर्हति, न तु मम पिता

इति।

अनुरागयुक्तया दृष्ट्या पश्यन्ती राजकुमारी अजीजस्य समीपम् आगतवती। मन्दस्वरेण उक्तवती च– "सुन्दराङ्ग! यदि भवान् न्यूनमूल्येन अश्वस्य विक्रयणं न कुर्यात् तर्हि भवतः शिरः शरीरात् पृथक् भवेत्। अतः उपायेन इतः पलायनं भवतः क्षेमाय भवेत्। मम समीपे एकम् अवगुण्ठनम् अस्ति, यस्य च अन्तः बहवः दीनाराः सीवनेन योजिताः सन्ति। यदा मम पिता अत्र आगच्छति तदा भवान् पातुं जलम् आवश्यकम् इति वदतु। जलानयनव्याजेन अहम् अन्तः गत्वा तत् अवगुण्ठनं धृत्वा आगमिष्यामि। ततः आवाम् अश्वस्य उपरि उपविश्य इतः पलायनं करवाव" इति।

अत्रान्तरे राजा तत्र आगतवान्। अजीजः उक्तवान् यत् मम महती पिपासा इति। राजकुमारी जलानयनव्याजेन अन्तः गतवती। दीनारयुक्तम् अवगुण्ठनं धृत्वा जलचषकेण सह बहिः आगतवती च। जलस्वीकरणव्याजेन अजीजः राजकुमार्याः हस्तं गृहीत्वा तां झटिति अश्वस्य उपरि उपवेशितवान्। स्वयं चापि अश्वस्य उपरि उपविश्य विद्युद्वेगेन ततः पलायितवान्।

क्षणत्रयस्य अनन्तरं राजा किं प्रवृत्तम् इति ज्ञातुं शक्तवान्। अतः सः अश्वरोहिणः भटान् तौ ग्रहीतुं प्रेषितवान्। अजीजस्य अश्वः तु वायुवेगेन धावति स्म। अतः अजीजः कस्यां दिशि अगच्छत् इति ज्ञातुम् एव अशक्नुवन्तः भटाः निराशाया



प्रत्यागतवन्तः।

अजीजः राजकुमार्या सह बहुषु देशेषु प्रयाणं कृतवान्। दिनानि मासाः च गताः। अश्वप्रत्यर्पणसमयः अपि उपस्थितः।

अश्वप्रत्यर्पणं स्मरन् अजीजः म्लानमुखः जातः। एतत् दृष्ट्वा राजकुमारी आतङ्कमिश्रितेन स्वरेण पृष्टवती– "मुखस्य म्लानतायाः कारणं किम्?" इति।

अजीजः अश्वप्राप्तिवृत्तान्तं, हमीदाय यत् वचनं दत्तं तच्च विस्तरेण निवेद्य उक्तवान्– "प्रिये! हमीदेन दत्तस्य वचनस्य अनुगुणं मया भवती दीनारयुक्तं वस्त्रं च तस्मै दातव्यम्। ऋते भवत्याः मम प्राणधारणं प्रायः असम्भवम्" इति।

सर्वं श्रुत्वा राजकुमारी आश्चर्यम् अनुभवन्ती उक्तवती– "भवान् मम हृदयं जितवान् इत्यतः सर्वस्वं परित्यज्य अहं भवता सह आगतवती। एतावत्पर्यन्तं यत् प्रवृत्तं तत् हमीदः न जानाति खलु? अतः अश्वस्य मूल्यरूपेण तस्मै सहस्रं दीनारान् ददातु। तावता अलम्" इति।

किन्तु वचनभङ्गं कर्तुं न इच्छति स्म अजीजः। अतः सः स्वनगरं गत्वा हमीदं दृष्ट्वा उक्तवान्– "श्रीमन्! भवतः अश्वस्य कारणतः मया राजकुमारी दीनारयुक्तम् अवगुण्ठनं च प्राप्तम्। कृपया स्वीकरोतु" इति।

अजीजस्य प्रामाणिकतां दृष्ट्वा नितराम् आश्चर्यचकितः हमीदः उक्तवान्– "भवतः वचनपरिपालनबुद्धिं दृष्ट्वा अहं नितरां सन्तुष्टः अस्मि। राजकुमारीं तु भवान् स्वचातुर्येण स्वसामर्थ्येन च प्राप्तवान्। अतः तां परिणीय सुखेन जीवतु भवान्। यावन्तः दीनाराः प्राप्ताः तत्र अर्धं भागं मह्यम् अर्पयतु। अश्वः च भवदीयः एव तिष्ठतु" इति।

एतेन अजीजः राजकुमारी च सन्तुष्टौ। ततः अल्पे एव काले अजीज-राजकुमार्योः विवाहः सवैभवं सम्पन्नः। हमीदः तौ सन्तोषेण आशिषा अनुगृह्य प्रेषितवान्।







# प्रकृतिवैचित्र्याणि—

## बहुनीडनिर्माता पक्षी



'जेन्नी रेन्' नामकः पक्षी आकारेण नितरां लघुः। 'स्कट्टी' 'जग्गी' इत्यपि तस्य अन्यत् नामद्वयम्। एतस्य ल्याटिन्नाम तु ट्रोग्लोडैट्स् इति। एषः पक्षी आकारेण लघु चेदपि एतस्य सामर्थ्यं तु अपूर्वम्। एषः महतः पक्षिणः अपि धैर्येण सम्मुखीकरोति। नीडनिर्माणं तु पुँपक्षी करोति। एषः युगपत् एव बहून् नीडान् रचयति। एतेषु योग्यम् एकं चित्वा अण्डानि प्रसूते पक्षिणी।





## अहो, कीटसामर्थ्यम्!

पिस्सूनामकः कश्चन कीटः स्वस्य दैर्घ्यस्य अपेक्षया अपि शतगुणितं दैर्घ्यं क्षणाभ्यन्तरे कूर्दनेन क्रामति। पृष्ठतः कूर्दने अपि समर्थः एषः। पिपीलिकाः १६ वर्षाणि यावत् जीवन्ति। एताः स्ववसतौ विविधान् कीटान् अतिथित्वेन पोषयन्ति। एतादृशस्य अतिथेः शरीरात् यः मधुरः रसः स्रवति सः एव पिपीलिकानाम् आहारः। बाह्यः शत्रुः अन्तः प्रविश्य कीटसम्पत्तिं न नाशयेत् इति उद्देशेन पिपीलिकाः सुवक्षादलस्य अपि व्यवस्थां कुर्वन्ति। श्वेतपिपीलिकाः कदाचित् उन्नतान् वल्मीकान् निर्मान्ति। एतादृशानां वल्मीकानाम् औन्नत्यं कदाचित् १५-२० द्वादशाङ्गुलोन्नतं भवति। एतेषां दर्शनतः मिश्रदेशीयानि शङ्कुगृहाणि स्मृतिपथम् आगच्छन्ति।



## महाकारिका जतुका

उड्डयनसमर्थः स्तन्यपायी जतुकापक्षी एकः एव। जतुकासु महाकारिकाः अपि भवन्ति, यासां च नाम 'कलांग्' इति उच्यते। एतादृश्यः महाकारिकाः जतुकाः इण्डोनेशिया मलेशिया इत्यादिषु देशेषु दृश्यन्ते। एतासां पक्षयोः दैर्घ्यं प्रायः ७२ अङ्गुलमितं भवति।

# विवाहदिने किमर्थं न उपस्थितः?

| | |
|---|---|
| रामः– श्याम, अभिनन्दनानि! | Congratulations, Shyam. |
| श्यामः –अनुगृहीतोऽस्म। किन्तु किमर्थं भवान् विवाहदिने न उपस्थितः? | Thanks a lot. But why didn't you come for the wedding? |
| रा – महती इच्छा तु आसीत्। किन्तु विरामः एव न लब्धः। | I was very keen on attending but was unable to manage to get leave. |
| श्या –मिथ्यावचनं तु न खलु एतत्? | Aren't you joking? |
| रा – सर्वथा न। मम पत्नीं पृच्छतु तावत्। विरामप्राप्त्यर्थं मया बहुधा प्रयत्नः कृतः। किन्तु सर्वं विफलम्। | Absolutely not. You can ask my wife. I tried my best but my efforts were all in vain. |
| श्या –तर्हि पत्नी वा प्रेषणीया आसीत्। | You should have at least sent your wife then! |
| रा – गच्छतु इति ताम् अहम् उक्तवान्। किन्तु तावद्दूरम् अहम् एकाकिनी न गच्छामि इति उक्तवती सा। | I wanted her to go but she said she wouldn't be able to go alone on such a long travel. |
| श्या –भवन्तौ अवश्यम् आगच्छतः इति निरीक्षितम् आसीत् मया। | I was certain that you would come; so I was waiting for you. |
| रा – किं कर्तुं शक्येत? सर्वं दैवाधीनम्। तदस्तु, भवान् कदा सपत्नीकः मम गृहम् आगच्छति? | What can we do. Everything depends on God. But leave it and tell me when are you coming to my house with your wife? |
| श्या –आगामिभानुवासरे तदनन्तरभानुवासरे च अन्यत्र गमनं निश्चितम् एव। ततः तु .....। | Both on coming Sunday and the Sunday next to that we have to go somewhere. So .... |
| रा – ततः पूर्वम् एव कदाचित् सायङ्काले आगच्छतु। | Come some evening before you get busy. |
| श्या –अस्तु। मम पत्नीं पृष्ट्वा दूरवाण्या दिनं सूचयिष्यामि। | OK, I shall find out from my wife and then let you know on phone. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अन्तर्हितः - Disappeared
अयोमयम् - Full of iron
अवगुण्ठनम् - Veil (cover for the face)
अवचयनम् - Plucking
कर्तितवान् - Cut (Past Tense)
कर्मकरः - Workman
काचकम् - Glass
काचमणिः - Glass bead
कीलकम् - A peg
गणः - Group
गृहस्वामी - House owner
जतुका - Bat (living creature)
जामाता - Son-in-law
दीनारः - Currency or Coin
निखनति - Fixes
निरूढवान् - Carried out
नीडः - Nest
पर्यायक्रमेण - In turn
पिपीलिका - Ant
प्रसूते - Gives birth
बाणवारकम् - Shield
भर्जनम् - Frying
मञ्चः - Cot
यमले - Twins (F)
यन्त्रागारम् - Factory
युगलम् - Couple
वणिक् - Merchant
वातायनम् - Window
विधुरः - Widower
विरलतया - Rarely
वीजनम् - Fanning
शाम्यति - Will be cured
श्रान्तः - Tired
श्वशुरः - Father-in-law
श्वश्रूः - Mother-in-law
साक्षी - Witness
सीवनेन - By stitching
संहृतवान् - Killed
स्नातकः - Graduate
स्नषा - Daughter-in-law

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

## विजितां शीर्षिकां जनवरी-९३ मासे प्रकटयिष्यामः।



M. Natarajan



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा नवम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'सप्टम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **अवलम्बते सविस्रम्भम्।**

द्वितीयचित्रम् - **समर्पयति सविभ्रमम्।**

प्रेषकः - श्री शूराध्यायी वि.जि.एस्. घनपाठी, ९/ए-४, वारन्मार्गः, मैलापुरम्, मद्रास्-४




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. [illegible]1.00 वायु सेवा से रु. **252.00**

**अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा**
**'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

